अथ यूषाद्यागमः—षडदशद्वादशाहेषु व्यतीतेषु क्रमेण वै । वातपित्तकफातङ्के-ष्वथ काला इमे क्रमः ॥ १ ॥ द्वंद्वजे संनिपाते च व्याधावारोग्यदर्शने । सति यवागूयूषादि कल्पयेदतिनैपुणात् ॥ २ ॥ मुद्गाम्लमूलकधणकान्कुलत्थान्मकुष्ठका-न्यावनयूषदेहल् । हितान्हितानां विहितांश्च पेयान्दद्याद्यवागूमपि पाचनैः स्वैः ॥ ३ ॥ अथ पथ्यदशाह्—नवज्वरे दिवास्वापस्नानभोजनमैथुनम् । क्रोधप्रवात-व्यायामकषायांश्च विवर्जयेत् ॥ १ ॥ निवातभवने वासमुष्णवारिनिषेवणम् । अभूरिजल्पं निष्क्रोधकामशोकं च रोगिणम् ॥ २ ॥ कुर्यादारोग्यसंपन्नं शीघ्रं वैद्यो विचक्षणः । कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३ ॥ कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा । यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं भवेत् ॥ ४ ॥ अर्धावशिष्टं भवति तदुष्णोदकमुच्यते । तत्पादहीनं वातघ्नमर्धहीनं तु पित्तनुत् ॥ ५ ॥ त्रिपादहीनं श्लेष्मघ्नं पाचनं दीपनं लघु । द्वंद्वजे सन्निपाते च ज्वरे पथ्यं सदार्तिजित् ॥ ६ ॥ शरदि स्यर्धपादोनं पादहीनं तु हेमन्ते । शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ ७ ॥ विपरीते ऋतौ तद्वत्पादपादावशेषितम् । भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ॥ ८ ॥ अजीर्णे जरयत्याशु पीतमुष्णोदकं निशि । धारापातेन विष्टम्भि दुर्जरं पवनाहतम् ॥ ९ ॥ शृतशीतं त्रिदोषघ्नं साद्यान्तभौमशीतलम् । दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ॥ १० ॥ रात्रौ शृतं तु दिवसे गुरुत्वमधिगच्छति । तप्तायःपिण्डसंसिक्तं लोष्ठनिर्वापितं जलम् ॥ ११ ॥ सर्वदोषहरं पथ्यं सदा नैरुज्यकारकम् । उष्णीकृतं जलं पथ्यं दीपनृट्कासजित्सु ॥ १२ ॥ शृतशीतं जलं पथ्यं त्रिदोषशमनं लघु । नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे ॥ १३ ॥ सद्यःशुद्धौ तथाऽऽध्माने व्याधौ वातकफोद्भवे । अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ॥ १४ ॥ हिक्कायां स्नेहपाने च पिबेदुष्णं जलं नरः । अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ १५ ॥ मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा । व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ १६ ॥ मूर्च्छापित्तोष्णदाहेषु विषमे च मदात्यये । भ्रमक्लमपरीतेषु मार्गोत्थे वमथौ तथा ॥ ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ १७ ॥ पानीयं[1] पानीयं शरदि वसन्ते च पानीयम् । नादेयं नादेयं शरदि वसन्ते च नाऽऽदेयम् ॥ १८ ॥ उक्तं हि तन्त्रान्तरे—अमर्मोपहते देशे शिरासंध्यस्थिवर्जिते ॥ वर्षावसन्तसमये कौपं वारि प्रशस्यते । अम्भः शरदि ताडागं नादेयमृतुषु त्रिषु ॥ १ ॥ उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमा । अधमस्य पलार्धेन स्नेहकाथौषधेषु च ॥ २ ॥ कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः । द्रवः शुक्त्याऽवलेह्यः पातव्यश्च चतुर्द्रवः ॥ ३ ॥ मात्रा मधुघृतादीनां काथे स्नेहेषु चूर्णवत् । द्विचत्वा-

---

१ अस्यार्थः—पानीयं जलं शरदि पानार्हं भवति निर्मलत्वात्त्रिदोषघ्नत्वाद्विशेषतः पित्तोपशान्तिहेतुत्वाच्च । वसन्ते च पुनस्तदेव पानीयं पानीयं रक्षणीयमल्पं पेयमिति भावः । पा रक्षण इत्यस्य धातो रूपमेतत् । नदीभवं जलं नादेयं जलं शरदि आदेयं न, अपि तु देयं दातव्यमित्यर्थः । वसन्ते च नादेयं जलं नाऽऽदेयं न ग्राह्यमिति ॥

त्रिंशता माषैरष्टादशकषद्कैः ॥ ४ ॥ पलं द्वादशषद्कं स्यात्तु आषद्कसमन्वितम् । कंप्याद्यल्पपले वारि द्विरष्टगुणमिष्यते ॥ ५ ॥ चतुर्भागावशेषं तु पेयं पलचतुष्टयम् । दीप्तानलं महाकायं पाययेदञ्जलिं अलम् ॥ ६ ॥ अन्ये त्वर्धं परित्यज्य प्रसृतं तु चिकित्सकाः । क्वाथस्यागमनिच्छन्तस्त्वष्टभागावशेषितम् ॥ ७ ॥ पारम्पर्योपदेशेन वृद्धवैद्याः पलद्वयम् । पाययन्त्यातुरं सामे पाचनं सप्तमेऽहनि ॥८॥

## अथौषधाद्यजीर्णेऽन्नस्य ग्राह्याग्राह्यविचारः ।

वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तथाऽऽमयमसंशयमाशु चैव । तद्बालवृद्धयुवतीमृदवो निपीय ग्लानिं परां समुपयान्ति बलक्षयं च ॥ १ ॥ जीर्णौषधलक्षणम्— अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता । लघुत्वमथ चोद्गारः शुद्धो जीर्णौषधाकृतिः ॥ २ ॥

## अजीर्णौषधलक्षणम् ।

क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजः । अरतिर्वमनं मोहो ह्यजीर्णौषधवैकृतिः ॥ १ ॥ औषधदोषे भुक्तं दोषेऽप्यसे तथौषधं पीतम् । न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ २ ॥ शीघ्रं विपाकमुपयाति बलं न हन्यादन्नावृतं न च पुनर्वदनान्निरेति । प्राग्भक्तसेवितमथौषधमेतदेव दद्याच्च भीरुशिशुवृद्धवराङ्गनाभ्यः ॥ ३ ॥ इति सर्वज्वरोपक्रमः ॥

## अथ ज्वरे पथ्यानि ।

तण्डुलीयकवास्तूकबालमूलकपर्पटान् । पटोलं तिक्तशाकं च गुडूचीपल्लवान्यपि ॥ १ ॥ कालशाकं निम्बपुष्पं मारीषं दार्विकादलम् । जीवन्तीं चापि चाङ्गेरीं सुनिषण्णकमार्षकैः ॥ २ ॥ पत्रशाकप्रियाणां तु ज्वरितानां प्रदापयेत् । मुद्गाम्भसूर्तांश्चणकान्कुलित्थांश्च मकुष्ठकान् ॥ ३ ॥ यूषार्थं यूषसात्म्यानां ज्वरितानां प्रदापयेत् । लावान्कपिञ्जलानेणान्पृषतान्शरभान्शशान् ॥ ४ ॥ कालपुच्छान्कुरङ्गांश्च तथैव मृगमातृकान् । मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत् ॥ ५ ॥ सारसक्रौञ्चशिखिनस्तथा तित्तिरकुक्कुटाः । ज्वरितानां न शस्यन्ते इति केचिद्व्यवस्थिताः ॥ ६ ॥ वृन्ताकपीलुककर्कोटपटोलकठिल्लकम् । फलशाककृते देयं सर्वं निःस्नेहमेव च ॥ ७ ॥ वत्सरोपितधान्यस्य तण्डुलान्धो ज्वरे हितम् । रोटिकार्थं प्रदातव्यं द्विवर्षोपितमल्पशः ॥ गोधूमादि यदा सात्म्यमन्यदप्यल्पमर्पयेत् ॥ ८ ॥ इति सुश्रुतात् ॥

## अथौषधग्रहणविचारः ।

तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः । औषधं हेमरजतमृद्भाजनपरिष्ठितम् ॥ १ ॥ पिबेत्प्रसन्नवदनः पीत्वा पात्रमधोमुखम् । निक्षिप्य पात्रे सलिलं ताम्बू-

धातुपकल्पयेत् ॥ २ ॥ यवागूनिशिखादाथा मसूरमुद्गपवैरावसाः । ते मन्दौषधवीर्याणि ततो गण्डूषवर्जनम् ॥ ३ ॥ कषायः कल्कस्य रसस्य पानं ,मासत्रयं चाशनपूर्णवीर्यम् । षण्मासवीर्यं गुडलेहयोश्च संवत्सरं तैलघृतस्य वीर्यम् ॥ ४ ॥

## अथ ज्वरे पाचनम् ।

यत्पचत्याममाहारं पचेदामं रसं च यत् । यदुपक्रामयेद्दोषांस्तद्धि पाचनमुच्यते ॥ १ ॥ न शोधयति यद्दोषान्समान्नोदीरयत्यपि । समीकरोति विषमान्स रसंशमनमुच्यते ॥ २ ॥ तयोः संप्रदानकालं चाऽऽह—पाचयेदातुरं सामं पाचनं सप्तमे दिने । शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत् ॥ ३ ॥

## अथ वातज्वरे ।

गुडूचीपिप्पलीमूलनागरैः पाचनं स्मृतम् । दद्याद्वातज्वरे पूर्णलिङ्गे सप्तमवासरे ॥ १ ॥ इति गुडूच्यादिपाचनम् । किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः । सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ॥ २ ॥ इति किरातादिः । शालिपर्णी बला रास्ना गुडूची सारिवा तथा । आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् ॥ ३ ॥ इति शालिपर्ण्यादिः । काश्मरीसारिवाद्राक्षात्रायमाणामृतोद्भवः । कषायः सगुडः पीतो वातज्वरविनाशनः ॥ ४ ॥ इति काश्मर्यादिः ॥ मरीचं चव्यकं शुण्ठी किरातं च हरीतकी । पिप्पली कटुका चैव वातज्वरविनाशनम् ॥ ५ ॥ इति मरीचादिचूर्णं । त्रिफलाव्योषगुडयुक्तशर्करात्रिवृतार्धकम् । मोदकं भक्षयित्वा तु पिबेच्चोष्णं जलं पुनः॥ पार्श्वशूलेऽरुचौ कासे ज्वरे चानिलसंभवे ॥ ६ ॥ इति त्रिफलाद्यो मोदकः ॥

## अथ पित्तज्वरे ।

कट्फलेन्द्रयवापाठातिक्तामुस्तैः शृतं जलम् । पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् ॥ १ ॥ इति कट्फलादिपाचनम् । दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् । क्वाथं पिबेच्छर्करयाऽवगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥ २ ॥ इति दुरालभादिः । द्राक्षाभयापर्पटकाब्दतिक्ताक्वाथं सशम्याकफलं विदध्यात् । प्रलापमूर्च्छाभ्रमदाहशोषतृषान्विते पित्तभवे ज्वरे च ॥ ३ ॥ इति द्राक्षादिः । एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः । किं पुनर्यदि युज्येत चन्दनोशीरधान्यकैः ॥ ४ ॥ इति पर्पटादिः वृन्दात् । औदुम्बरस्य निर्यासः सितया दाहनाशनः । छिन्नासारः सितायुक्तः पित्तज्वरनिषूदनः ॥ ५ ॥ द्राक्षा चैव गुडूची च मुस्ता पर्पटकं तथा । कटुका च समैः क्वाथः पित्तज्वरविनाशनः ॥६॥ चन्दनं च सगन्धं च बालकोशीरपर्पटाः । मुस्ताशुण्ठीसमायुक्तः पित्तज्वरनिषूदनः ॥ ७ ॥ अहो किमर्थं बहवः कषायाः पराशराद्यैर्मुनिभिः प्रदिष्टाः । पित्तज्वरघ्नं-

---

१ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ।

सक्तं न किं स्यात्क्वाथो गुडूच्यामलपर्पटानाम् ॥ ८ ॥ जलजलजलदवाहरेणुविश्वौषधशिशिरैः शिशिरीकृतः कषायः । ननु खलु हरति ज्वरं प्रकृष्टं सघृणिनिदाघतृषं निपीयमानः ॥ ९ ॥ अक्षीबवारिणा सिता सितायुता तु रोहिणी । विदाहतृड्भ्रमान्वितं निहन्ति पित्तजं ज्वरम् ॥ १० ॥ निम्बपल्लवसंभूतरसफेनप्रलेपनात् । तृड्दाहमोहाः प्रशमं यान्ति पित्तसमुद्भवाः ॥ ११ ॥ केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् । जिह्वातालुगलक्लोमशोषमूर्ध्नि दापयेत् ॥ १२ ॥

## अथ कफज्वरे ।

बीजपूरशिफापथ्यानागरग्रन्थिकैः शृतम् । सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ १ ॥ इति बीजपूरादिपाचनम् । भूनिम्बनिम्बपिप्पल्यः शठी शुण्ठी शतावरी । गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् ॥ २ ॥ पटोलत्रिफलातिक्ताशठीवासामृतोद्भवः । क्वाथो मधुयुतः पीतो हन्यात्कफकृतं ज्वरम् ॥ ३ ॥ निदिग्धिकाछिन्नरुहोपकुल्याविश्वौषधैः साधितमम्बु पीतम् । हन्ति ज्वरश्वासकासशूलाग्निमान्द्यं जठरानिलं च ॥ ४ ॥ शृङ्गीकणाकट्फलपौष्कराणां क्षौद्रान्वितानां विहितोऽवलेहः । श्वासेन कासेन युतं बलासज्वरं जयेदत्र न कापि शङ्का ॥ ५ ॥ इति चातुर्भद्रावलेहिका । भार्ङ्गीगुडूचीघनदारुसिंहीशुण्ठीकणापुष्करजः कषायः । ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधं करोति प्रहर्षं तनोति ॥ ६ ॥

## अथ सर्वज्वरे ।

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः । सर्वज्वरभयातङ्को भेदी दीपनपाचनः ॥ १ ॥ अमृतारिष्टकचन्दनपद्मकधान्योद्भवः क्वाथः । ज्वरहृल्लासच्छर्दितृष्णादाहारुचीर्हन्यात् ॥ २ ॥ छिन्नोद्भवाम्बुधरधन्वयवासविश्वैर्दुःस्पर्शपर्पटकमेघकिराततिक्तैः । मुस्ताटरूषकमहौषधधन्वयासैः क्वाथं पिबेदनिलपित्तकफज्वरेषु ॥ ३ ॥ इति पृथक्चरणत्रयक्वाथाः ॥ धान्यत्रिकटुसिन्धूत्थमुद्गसैन्धवयोजितः । भृष्टश्च हिङ्गुतैलाभ्यां मण्डोऽष्टगुणः स्मृतः ॥ ४ ॥ दीपनः प्राणदो बस्तिशोधनो रक्तवर्धनः । ज्वरघ्नः सर्वदोषघ्नो मण्डोऽष्टगुण उच्यते ॥ ५ ॥ इत्यष्टगुणमण्डः ।

## अथ वातपित्तज्वरे ।

छिन्नोद्भवापर्पटवारिवाहभूनिम्बशुण्ठीजनितः कषायः । समीरपित्तज्वरजर्जराणां करोति भद्रं खलु पञ्चभद्रः ॥१॥ पञ्चमूल्यमृतामुस्ताविश्वाभूनिम्बसाधितः । कषायः शमयत्याशु वायुमायुभवं ज्वरम् ॥ २ ॥ इति वैद्यजीवनात् ॥ त्रिफलाकाश्मरीरास्नाराजवृक्षाटरूषकैः । शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ३ ॥ इति वृन्दात् ।

## अथ वातश्लेष्मज्वरे ।

सिंहीयवानीच्छिन्नानां क्वाथश्चपल्या युतः । कफवातज्वरश्वासशूलपीनसकास-

प्रागुपक्रमयेद् ॥ २ ॥ भयभूतपिशाचाद्या यक्षगन्धर्वराक्षसाः । ते शान्त्यौषधवीर्याणि सद्यो गण्डूषवर्जनम् ॥ ३ ॥ क्वाथस्य कल्कस्य रसस्य पाने मासत्रयं चाशनचूर्णवीर्यम् । षण्मासवीर्यं गुडलेहयोश्च संवत्सरं तैलघृतस्य वीर्यम् ॥ ४ ॥

## अथ ज्वरे पाचनम् ।

यत्पचत्याममाहारं पचेदामं रसं च यत् । यदपक्वमपचेद्दोषांश्चापि पाचनमुच्यते ॥ १ ॥ न शोधयति यद्दोषान्समान्नोदीरयत्यपि । समीकरोति विषमांस्तत्संशमनमुच्यते ॥ २ ॥ तयोः संशमनकाले चाऽऽह—पाचयेच्चतुरं सामं पाचनं सप्तमे दिने । शमनेनाथवा दद्यात् निरामं तैलमुपाचरेत् ॥ ३ ॥

## अथ वातज्वरे ।

गुडूचीपिप्पलीमूलनागरैः पाचनं स्मृतम् । दद्याद्वातज्वरे पूर्णलिङ्गे सप्तमवासरे ॥ १ ॥ इति गुडूच्यादिपाचनम् । किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः । सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ॥ २ ॥ इति किरातादिः । शालिपर्णी बला रास्ना गुडूची सारिवा तथा । आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् ॥ ३ ॥ इति शालिपर्ण्यादिः । काश्मरीसारिवाद्राक्षात्रायमाणामृतोद्भवः । कषायः सगुडः पीतो वातज्वरविनाशनः ॥ ४ ॥ इति काश्मर्यादिः ॥ मरीचं कणकं शुण्ठी किराते च हरीतकी । पिप्पली कटुका चैव वातज्वरविनाशनम् ॥ ५ ॥ इति मरीचादिचूर्णं । त्रिफलाव्योषगुडयुक्शर्कराभिर्घृतार्धकम् । मोदकं भक्षयित्वा तु पिबेदुष्णं जलं पुनः । पार्श्वशूलेऽरुचौ कासे ज्वरे वातिकसंभवे ॥ ६ ॥ इति त्रिफलाद्यो मोदकः ॥

## अथ पित्तज्वरे ।

कट्फलेन्द्रयवाम्बष्ठातिक्तामुस्तैः शृतं जलम् । पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् ॥ १ ॥ इति कट्फलादिपाचनम् । दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् । क्वाथं पिबेच्छर्करयाऽवगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥ २ ॥ इति दुरालभादिः । द्राक्षाभयापर्पटकाब्दतिक्ताक्वाथं सशम्याकफलं विदध्यात् । प्रलापमूर्च्छाभ्रमदाहशोषतृषान्विते पित्तभवे ज्वरे च ॥ ३ ॥ इति द्राक्षादिः । एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः । किं पुनर्यदि युज्येत चन्दनोशीरधान्यकैः ॥ ४ ॥ इति पर्पटादिः वृन्दात् । औदुम्बरस्य निर्यासः सितया दाहनाशनः । छिन्नासारः सितायुक्तः पित्तज्वरनिषूदनः ॥ ५ ॥ द्राक्षा चैव गुडूची च मुस्ता पर्पटकं तथा । कटुका च समैः क्वाथः पित्तज्वरविनाशनः ॥ ६ ॥ चन्दनं च सगन्धं च वालकोशीरपर्पटाः । मुस्ताशुण्ठीसमायुक्तः पित्तज्वरनिषूदनः ॥ ७ ॥ अहो किमर्थं बहवः कषायाः पराशराद्यैर्मुनिभिः प्रदिष्टाः । पित्तज्वरघ्नं-

---

२ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ।

## अथ वालुकास्वेदः ।

खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः । शमयति वातकफामयमस्तकशूलाङ्गभेदादीन् ॥ १ ॥

## अथ नस्यम् ।

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् । अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ १ ॥ तेन प्रभिद्यते श्लेष्मा प्रभिन्नस्तु प्रसिच्यते । शिरोहृदयकण्ठास्यपार्श्वरुक्चोपशाम्यति ॥ २ ॥ मधूकसारसैन्धवयवचोषणकणाः समाः । श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ ३ ॥ सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठपिप्पली । बस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ ४ ॥

## अथ निष्ठीवनम् ।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम् । आकण्ठं धारयेच्चाऽऽस्ये निष्ठीवेच्च पुनः पुनः ॥ १ ॥ तेनास्य हृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात् । लीनो ह्याकृष्यते शुष्को लाघवं चास्य जायते ॥ २ ॥

अवलेहः—कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह । श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकः ॥ १ ॥ अष्टांगावलेहिका—कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी । श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ २ ॥ एषाऽवलेहिका हन्ति संनिपातं सुदारुणम् । हिक्कां श्वासं च कासं च कण्ठरोधं च घुर्घुरम् । घृतयोज्यं कफोद्रेके चूर्णमार्द्रकजै रसैः ॥ ३ ॥ इत्यष्टाङ्गावलेहिका ।

## अथाञ्जनं नस्यं च ।

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः । अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ १ ॥ कस्तूरी मरिचं वाजिलाला च मधुनाऽञ्जनम् । तन्द्रां निवारयत्याशु व्योषप्रधमनं तथा ॥ २ ॥

## अथाञ्जनोद्धूलने ।

तुरङ्गलालासहिता मनःशिला निहन्ति तन्द्रां सकृदञ्जनेन । बन्धूकपत्राणि हरीतकी च संस्वेदिता स्वेदविकारहन्त्री ॥ १ ॥ भूनिम्बकटुकाकुष्ठं कारवीन्द्रयवः शटी । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ २ ॥ प्रस्वेदे कण्ठरोधे च संविमर्दनमिष्यते । एतदुद्धूलनं श्रेष्ठं संनिपातहरं परम् ॥ ३ ॥ स्वेदोद्गमे भृष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवन्ति । जीर्णं शकृद्गोलवणस्य भाण्डं स्वेदापहं गुण्डनमुत्तमं हि ॥ ४ ॥ अयं वृद्धवाग्भटः—यवानिका वचा शुण्ठी पिप्पली कारवी तथा । एतैरुद्धूलनं शस्तं त्रिदोषोत्थे ज्वरे नृणाम् ॥५॥ किरातं कटुका पथ्या कणा कायफलं वचा । उद्धूलनं त्रिदोषे च सदा शैत्ये च शस्यते ॥ ६ ॥ विषभागो भवेदेको मरिचास्त्रिगुणो मतः । आरण्योपलजं भस्म षोडशांशसमन्वितम् ॥ ७ ॥ एकत्र मिलितं चूर्णं धूर्तस्वरसभावितम् । आतपे शोषितं तच्च

निर्त् ॥ १ ॥ क्षुद्रामृतानागरपुष्कराह्वैः कृतः कषायः कफमारुतोत्तरे । सश्वास-
कासारुचिपार्श्वशूले ज्वरे त्रिदोषप्रभवेऽपि शस्तः ॥ २ ॥ दारुघनकणामूलकु-
स्नातिधाभयाकृतः । क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ॥ ३ ॥ मुस्ता
पर्पटकं शुण्ठी गुडूची च दुरालभा । कफवातारुचिच्छर्दिदाहशोषज्वरापहः ॥४॥
भूनिम्बमुस्ताकटुकीगुडूचीदुरालभापर्पटनागराख्यैः । क्वाथं मरुच्छ्लेष्महरं वदन्ति
सूर्यो यथा नाशयतेऽन्धकारम् ॥ ५ ॥

## अथ पित्तश्लेष्मज्वरे ।

अमृतारिष्टकटुकामुस्तेन्द्रयवनागरैः । पटोलचन्दनाभ्यां च पिप्पलीचूर्णयुक् कृतः ॥ १ ॥ अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम् । छर्दिरोचकहृल्लासदाहतृष्णानिवारणम् ॥ २ ॥ इत्यमृताष्टकम् । पटोलं चन्दनं मूर्वा पाठा तिक्तामृताकणा । पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहः ॥ ३ ॥ इति पटोलादिः । पटोलं पिचुमन्दं च त्रिफला मधुकं बला । साधितोऽयं कषायः स्यात्पित्तश्लेष्ममये ज्वरे ॥ ४ ॥ तिक्तोशीरबलाधान्यपर्पटाम्भोधरैः कृतः । क्वाथः पुनः समायातं ज्वरं शीघ्रं निवारयेत् ॥ ५ ॥ इति तिक्तादिः । कण्टकार्यमृताभार्ङ्गी नागरेन्द्रयवासकम् । भूनिम्बं चन्दनं मुस्ता पटोलं कटुरोहिणी ॥ ६ ॥ कषायं पाययेदेतं पित्तश्लेष्मज्वरापहम् । दाहतृष्णारुचीहिक्काकासहृत्पार्श्वशूलनुत् ॥ ७ ॥ लोहितचन्दनपद्मकधान्यच्छिन्नरुहापिचुमन्दकषायः । पित्तकफज्वरदाहपिपासावान्तिविनाशहुताशकरः स्यात् ॥ ८ ॥ लाजैर्वा तण्डुलैर्भृष्टैर्लाजमण्डः प्रकीर्तितः । श्लेष्मपित्तहरो ग्राही पिपासाज्वरजिन्मतः ॥ ९ ॥ इति लाजमण्डः । जीरकं क्वाथयेल्लाम्बु शीतपूर्वज्वरे हितम् ॥ १० ॥

## अथ संनिपाते ।

संनिपातज्वरे पूर्वं कुर्यादामकफापहम् । पश्चाच्छ्लेष्मणि संक्षीणे शमयेत्पित्तमारुतौ ॥ १ ॥ लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा । अवलेहोऽञ्जनं चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ २ ॥ त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा । लङ्घनं संनिपातेषु कुर्यादारोग्यदर्शनात् ॥ ३ ॥ दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता । न कश्चिद्दोषरहितो लङ्घनं सहते नरः ॥ ४ ॥ रसस्थे रससंशुद्धी रक्तस्थे रक्तमोक्षणम् । मांसस्थे रेचनं शस्तं मेदोघ्नं मेदसि स्थिते ॥ ५ ॥ रेचनं वमनं स्वेदश्चास्थिस्थे ? स्वेदमर्दनम् । मज्जशुक्राशयं दृष्ट्वा समसाध्यं ज्वरं वदेत् ॥ ६ ॥ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ॥ ७ ॥ तक्षायोक्ताञ्जनं पक्षताल्वादिषु त्रिदोषजे । रुद्राभिषेकभूदेवभोजनमहाजाप्यतः । मधुरक्षादिभिः कार्या संनिपाते प्रतिक्रिया ॥ ८ ॥

## अथ पाचनम् ।

कण्टकारीद्वयं शुण्ठी धान्यकं सुरदारु च । एभिः शृतं पाचनं स्यात्सर्वज्वरनिवारणम् ॥ १ ॥

## अथ वालुकास्वेदः ।

खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः । शमयति वातकफामयमस्तकशूलाङ्गभेदादीन् ॥ १ ॥

## अथ नस्यम् ।

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् । अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ १ ॥ तेन प्रभिद्यते श्लेष्मा प्रभिन्नस्तु प्रसिच्यते । शिरोहृदयकण्ठास्यपार्श्वरुक्चोपशाम्यति ॥ २ ॥ मधूकसारसिन्धूत्थवचोषणकणाः समाः । श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ ३ ॥ सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठपिप्पली । बस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ ४ ॥

## अथ निष्ठीवनम् ।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम् । आकण्ठं धारयेच्चाऽऽस्ये निष्ठीवेच्च पुनः पुनः ॥ १ ॥ तेनास्य हृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात् । लीनोऽप्याकृष्यते शुष्को लाघवं चास्य जायते ॥ २ ॥

अवलेहः—कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह । श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकः ॥ १ ॥ अष्टांगावलेहिका—कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी । श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ २ ॥ एषाऽवलेहिका हन्ति संनिपातं सुदारुणम् । हिक्कां श्वासं च कासं च कण्ठरोधं च घुर्घुरम् । एतयोऽयं कर्कोटके चूर्णमार्द्रकजे रसैः ॥ ३ ॥ इत्यष्टाङ्गावलेहिका ।

## अथाञ्जनं नस्यं च ।

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः । अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ १ ॥ कस्तूरी मरिचं वाजिलाला च मधुनाऽञ्जनम् । तन्द्रां निवारयत्याशु व्योषप्रधमनं तथा ॥ २ ॥

## अथाञ्जनोद्धूलने ।

तुरगलालासहिता मनःशिला निहन्ति तन्द्रां सकृदञ्जनेन । यच्चूलपत्राणि हरीतकी च संस्वेदिता स्वेदविकारहन्त्री ॥ १ ॥ भूनिम्बकटुकाकुष्ठं कारवीन्द्रयवः शठी । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ २ ॥ प्रस्वेदे कण्ठरोधे च संधिमर्दनमिष्यते । एतदुद्धूलनं श्रेष्ठं संनिपातहरं परम् ॥ ३ ॥ स्वेदोद्गमे भृष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवन्ति । जीर्णे शकृद्धोलवणस्य भाण्डे स्वेदापहं गुण्ठनमुत्तमं हि ॥ ४ ॥ अयं वृद्धवाग्भटः—यवानिका वचा शुण्ठी पिप्पली कारवी तथा । एतैरुद्धूलनं शस्तं त्रिदोषोत्थे ज्वरे नृणाम् ॥५॥ किरातं कटुका पथ्या कणा कायफलं वचा । उद्धूलनं त्रिदोषे च सदा शैत्ये च शस्यते ॥ ६ ॥ विषभागो भवेदेको मरीचाद्द्विगुणो मतः । आरण्योपलजं भस्म षोडशांशसमन्वितम् ॥ ७ ॥ एकत्र मिलितं चूर्णं धूर्तस्वरससमन्वितम् । आतपे शोषितं सच

शिरः ॥ १ ॥ क्षुद्रामृतानागरपुष्कराह्वैः कृतः कषायः कफमारुतोत्तरे । सश्वास-कासारुचिपार्श्वशूले ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥ २ ॥ आरग्वधकणामूलमुस्त-तिक्ताभयाकृतः । क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ॥ ३ ॥ मुस्तं पर्पटकं शुण्ठी गुडूची च दुरालभा । कफवातारुचिच्छर्दिदाहशोषज्वरापहा ॥ ४ ॥ भूनिम्बमुस्तानवकटुकीगुडूचीदुरालभापर्पटनागराख्यैः । क्वाथं मरुच्छ्लेष्महरं वदन्ति सूर्यो यथा नाशयतेऽन्धकारम् ॥ ५ ॥

## अथ पित्तश्लेष्मज्वरे ।

अमृतारिष्टकटुकामुस्तेन्द्रयवनागरैः । पटोलचन्दनाभ्यां च पिप्पलीचूर्णयुक् शृतः ॥ १ ॥ अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम् । छर्दितृष्णादाहतृष्णा-निवारणम् ॥ २ ॥ इत्यमृताष्टकम् । पटोलं चन्दनं मूर्वा पाठा तिक्तामृता-कणा । पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहाः ॥ ३ ॥ इति पटोलादिः । पटोलं पिचुमन्दं च त्रिफला मधुकं बला । साधितोऽयं कषायः स्यात्पित्तश्लेष्मभवे ज्वरे ॥ ४ ॥ तिक्तोशीरबलाधात्रीपर्पटाम्बोधरैः कृतः । क्वाथः पुनः समायातं ज्वरं दीर्घं निवारयेत् ॥ ५ ॥ इति तिक्तादिः । कण्टकार्यमृताभार्गीनागरेन्द्रयवास-कम् । भूनिम्बं चन्दनं मुस्ता पटोलं कटुरोहिणी ॥ ६ ॥ कषायं पाययेदेतं पित्त-श्लेष्मज्वरापहम् । दाहतृष्णारुचीहिक्काकासहृत्पार्श्वशूलहृत् ॥ ७ ॥ लोहितचन्दन-पद्मकधान्यच्छिन्नरुहापिचुमन्दकषायः । पित्तकफज्वरदाहपिपासावान्तिविना-शहुताशकरः स्यात् ॥ ८ ॥ लाजैर्वा मधुशर्कराभिर्लाजमण्डः प्रकीर्तितः । श्लेष्म-पित्तहरो ग्राही पिपासाज्वरनिग्रहः ॥ ९ ॥ इति लाजमण्डः । नीरदं कारयेदम्बु पीतपूर्वज्वरे हितम् ॥ १० ॥

## अथ संनिपाते ।

संनिपातज्वरे पूर्वं कुर्यादामकफापहम् । पश्चाच्छ्लेष्मणि संक्षीणे शमयेत्पित्त-मारुतौ ॥ १ ॥ लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा । अवलेहोऽञ्जनं चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ २ ॥ त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा । लङ्घनं संनिपातेषु कुर्याद्वारोग्यदर्शनात् ॥ ३ ॥ दोषाणामेव सा शक्तिर्लङ्घने या सहि-ष्णुता । न कश्चिद्दोषरहितो लङ्घनं सहते नरः ॥ ४ ॥ रसस्थे रससंशुद्धी रक्तस्थे रक्तमोक्षणम् । मांसस्थे रेचनं शस्तं मेदोघ्नं मेदसि स्थिते ॥ ५ ॥ रेचनं वमनं स्वेदश्चास्थिस्थे ? स्वेदमर्दनम् । मज्जशुक्राशयं दृष्ट्वा समसाध्यं ज्वरं वदेत् ॥ ६ ॥ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रिया-संकरो हितः ॥ ७ ॥ तथायोज्याञ्जनं पञ्चवल्यादिषु त्रिदोषजे । रुद्राभिषेकभूदेव-भोजनमहजाप्यतः । मन्त्ररक्षादिभिः कार्या संनिपाते प्रतिक्रिया ॥ ८ ॥

## अथ पाचनम् ।

कण्टकारीद्वयं शुण्ठी धान्यकं सुरदारु च । एभिः शृतं पाचनं स्यात्सर्वज्वरनि-वारणम् ॥ १ ॥

## अथ वालुकास्वेदः।

खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः। शमयति वातकफामयमस्तकशूलाङ्गभेदादीन्॥ १॥

## अथ नस्यम्।

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम्। अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत्॥ १॥ तेन प्रभिद्यते श्लेष्मा प्रभिन्नस्तु प्रसिच्यते। शिरोहृदयकण्ठास्यपार्श्वरुक्चोपशाम्यति॥ २॥ मधूकसारसिन्धूत्थवचोषणकणाः समाः। श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम्॥ ३॥ सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठपिप्पली। बस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम्॥ ४॥

## अथ निष्ठीवनम्।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम्। आकण्ठं धारयेच्चाऽऽस्ये निष्ठीवेच्च पुनः पुनः॥ १॥ तेनास्य हृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात्। लीनो व्याकृष्यते शुष्को लाघवं चास्य जायते॥ २॥

अथलेहः—कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह। श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकः॥ १॥ अष्टांगावलेहिका—कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी। श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत्॥ २॥ एषाऽवलेहिका हन्ति संनिपातं सुदारुणम्। हिक्कां श्वासं च कासं च कण्ठरोधं च घुर्घुरम्। एतद्योग्यं कफोद्रेके चूर्णमार्द्रकजै रसैः॥ ३॥ इत्यष्टाङ्गावलेहिका।

## अथाञ्जनं नस्यं च।

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः। अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः॥ १॥ कस्तूरी मरिचं वाजिलाला च मधुनाऽञ्जनम्। तन्द्रां निवारयत्याशु व्योपप्रधमनं तथा॥ २॥

## अथाञ्जनोद्धूलने।

तुरङ्गलालासहिता मनःशिला निहन्ति तन्द्रां सकृदञ्जनेन। बब्बूलपत्राणि हरीतकी च संस्वेदिता स्वेदविकारहन्त्री॥ १॥ मूलिस्थकटुकाकुष्ठं कारवीन्द्रयवः शठी। एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥ २॥ प्रस्वेदे कण्ठरोधे च संधिमर्दनमिष्यते। एतदुद्धूलनं श्रेष्ठं संनिपातहरं परम्॥ ३॥ स्वेदोद्गमे भृष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवन्ति। जीर्णे शकृद्गोर्लवणस्य भाण्डे स्वेदापहं गुण्ठनमुत्तमं हि॥ ४॥ अथ वृद्धवाग्भटः—यवानिका वचा शुण्ठी पिप्पली कारवी तथा। एतैरुद्धूलनं शस्तं त्रिदोषोत्थे ज्वरे नृणाम्॥५॥ किराततं कटुका पथ्या कणा कायफलं वचा। उद्धूलनं त्रिदोषे च सदा शैत्ये च शस्यते॥ ६॥ विषभागो भवेदेको मरीचाद्विगुणो मतः। आरण्योपलजं भस्म षोडशांशसमन्वितम्॥ ७॥ एकत्र मिलितं चूर्णं धूर्तसारसमाचितम्। आतपे

दीप्तं स्वेदहरं परम् ॥ ८ ॥ अथवा चणका मुद्रा यवानीचूर्णमिश्रिताः । चणे
णरजोयुक्ताः स्वेदसंशोषणा मताः ॥ ९ ॥

## अथ संनिपाते जिह्वायां लेपः ।

उत्सुष्का स्फुटिता जिह्वा द्राक्षया मधुपिष्टया । प्रलेपयेत्सघृतया संनिपा
दाहे ज्वरे ॥ १ ॥ सुवर्णगुग्गुलगजमयालैः कस्तूरिकाकुङ्कुमरोचनं च । धरा
द्राक्षमधूकविल्वं कुष्ठं च खर्जूरपुनर्नवा च ॥ २ ॥ द्राक्षा कणा नागपुष्प
सारङ्गशृङ्गं कतकस्य बीजं । एरण्डमूलं हारसपर्यं च मयूरिका श्वेतपुनर्नवा च
स्तन्येन पिष्ट्वा कुरु संनिपाते लेपं सदा सर्वगदं निहन्ति ॥ ३ ॥ अथ पंचमु
कयूषः—यवकोलकुलित्थानां मुद्गमूलकयोरपि । एकैकं मुष्टिमादाय पचेदष्ट
जले ॥ ४ ॥ पञ्चमुष्टिक इत्येष वातपित्तकफापहः । शस्यते गुल्मशूले च श्व
कासे क्षये ज्वरे ॥ ५ ॥

## अथ सप्तमुष्टिकयूषः ।

कुलित्थयवकोलैश्च मुद्गमूलकशुष्ककैः । शुण्ठीधान्यकयुक्तैश्च यूषः श्लेष्मा
फापहः । सप्तमुष्टिक इत्येष संनिपातज्वराञ्जयेत् ॥ १ ॥

## अथ सिद्धार्थादिप्रलेपकः ।

सिद्धार्थको वचा हिङ्गु करञ्जः सुरदारु च । मञ्जिष्ठा त्रिफला श्वेता कट
त्र्यूषणम् ॥ १ ॥ प्रियङ्गुश्च शिरीषं च निशा दार्वी समांशतः । अजामू
संपिष्टो गोमूत्रैर्वाऽथ चूर्णितः । सर्वज्वरं निहन्त्याशु सिद्धार्थादिप्रलेपकः ॥

## अथ क्वाथः ।

भार्ङ्गीभूनिम्बनिम्बैरेरण्डकटुकवचाब्दोपचासाविशालाराज्ञानन्तापटोलीसुरद
रजनीपाठकाकुण्डुकैश्च । भार्ङ्गीदार्वीगुडूचीत्रिवृदतिविषिकापुष्करत्रायमाणैर्यो
सिंहीकलिङ्गैस्त्रिफलशटिसुतैः कल्पितस्तुल्यभागैः ॥ १ ॥ क्वाथो द्वात्रिंशदाख्य
षिकदशमहासंनिपाताभिहन्त्याच्छूलं कासादिहिक्काकसमगुदरुजाध्मानविध्व
कारी । ऊरुस्तम्भान्त्रवृद्धिं गलगदमरुचिं सर्वसंधिग्रहार्तिं भातृशं यो निहन्यान्
रिपुरिव चेद्रोगजालं तथैव ॥ इति द्वात्रिंशदंशः ॥ २ ॥ भूनिम्बदारुदशमूलम
पथाब्दतिक्तेन्द्रबीजधनिकेभकणाकषायः । तन्द्राप्रलापकसनारुचिदाहमोहश्वा
दियुक्तमखिलज्वरमाशु हन्यात् ॥ ३ ॥ इत्यष्टादशाङ्गः ॥ क्षुद्रापौष्करभूनिम्ब
हूचीविश्वभेषजैः । पञ्चतिक्तकनामाऽयं क्वाथो हन्त्यष्टधाज्वरम् ॥ ४ ॥ अथान्य
—दार्व्यम्बुदस्तिक्तफलत्रिकं च क्षुद्रा पटोली रजनी च निम्बः । क्वाथं विदु
ज्वरसंनिपाते निश्चेतने पुंसि विबोधनार्थम् ॥ ५ ॥

कफप्रधानसंनिपाते—ग्रन्थीन्द्रजामरतरुक्रिमिशत्रुभार्ङ्गीशृङ्गत्रिकट्वनल
दफलपौष्कराणाम् । रास्नामयाबृहतिकाद्वयदीप्यभूतकेशीकिरातवचाचवि
शृङ्गीणाम् ॥ ६ ॥ क्वाथो हन्यात्संनिपातान्समग्रान्बुद्धिभ्रंशं स्वेदशैत्यप्रलाप
शूलाध्मानं विद्रधिं श्लेष्मवातान्वातव्याधीन्सूतिकानां च तद्वत् ॥ ७ ॥

वातप्रधानसंनिपाते—अर्कानन्ताकिरातामरतरुदसनासिन्दुवारोग्रगन्धात-
कौरीशिग्रुपथ्योषणघुणदयिताभार्ङ्गवाणां कषायः । सद्यस्त्रीवांस्त्रिदोषानपहरति
धनुर्मारुतं दन्तबन्धं शैत्यं गात्रेषु गाढं श्वसनकसनकं सूतिकावातरोगान् ॥ ८ ॥
अन्यच्च अर्कग्रन्थिकशिग्रुदारुचविकानिर्गुण्डिका पिप्पली रास्नाभृङ्गपुनर्नवानलद-
धामूनिम्बशुण्ठीकृतः । क्वाथः संहरति त्रिदोषमखिलं स्वापानिलं सूतिकानाना-
मारुतशैत्यशान्तिकृदपस्मारस्मारत्र्यम्बकः ॥ ९ ॥ बिल्वोऽग्निमन्थः स्योनाकः
काश्मरी पाटला स्थिरा । त्रिकण्टकः पृश्निपर्णी बृहती कण्टकारिका ॥१०॥ दश-
मूलमिदं श्वाससंनिपातज्वरापहम् । दशमूली शटी शृङ्गी पौष्करं सदुरालभम्
॥ ११ ॥ शुण्ठी कुटजबीजं च पटोलं कटुरोहिणी । अष्टादशाङ्ग इत्येष संनिपा-
तज्वरापहः ॥ कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥ १२ ॥ इति दशमूलाद्य-
ष्टादशाङ्गः । लशुनं तिक्तकं काण्डं भार्ङ्गी चातिविषा तथा । नरमूत्रेण च क्वाथः
संनिपाते सुदारुणे ॥ १३ ॥ इति लशुनादिः ।

## अथ संधिकादीनां चिकित्सा ।

संधिके हितमस्ति लङ्घनविधिस्स्वेदोपनाहादिकं रूक्षं कर्म समग्रमेव विहितं
कुर्याद्यवागूरसम् । मूलीपञ्चककल्ककल्पितमिदं सम्भागधीमिश्रितं कौलत्थेन
रसेन सैन्धवयुतं पेयं च विश्वौषधम् ॥ १ ॥ रास्नागुडूचीशटिवृद्धदारुसुराह्ववि-
श्वाग्निफलावरीभिः । क्वाथं पिबेद्गुग्गुलुसंप्रयुक्तं समस्तसंधिग्रहसंनिपाते ॥ २ ॥
रास्नाशुण्ठीगुडूचीसहचरजलदाभीरुपथ्यासुराह्वैश्छिन्नाकर्पूरवासानिलरिपुसहितैः
पञ्चमूलीद्वयेन । एभिर्द्रव्यैः कषायस्त्वरितमपहरेत्पीतमात्रः प्रभाते मन्यास्तम्भा-
वभृष्टिं ज्वरपिटककटीसंधिसर्वाङ्गपीडाः ॥ ३ ॥ अमृतोरुबूकविश्वासुरतरुरास्नाहरी-
तकीक्वाथः । सकलसमीरणरोगान्प्रातः सद्यो हरेत्पीतः ॥ ४ ॥ ग्रन्थिककलित-
रुपथ्याकृतमालशिवाटरूपकैर्विहितः । एरण्डतैलयुक्तः क्वाथो हन्यान्मरुन्मान्थम्
॥ ५ ॥ इति संधिकचिकित्सा ॥

अथान्तकस्यासाध्यत्वादौषधं नास्ति ॥

## अथ रुग्दाहस्य चिकित्सा ।

जलधरमलयजनागरसवालकोशीरपर्पटैः क्वथितम् । यः पिबति पयः शीतं
शाम्यति रुग्दाहकस्तस्य ॥ १ ॥ बदरीपल्लवलेपः श्रीखण्डारिष्टफेनसंयुक्तः ।
दातव्यः पदतलयो रुग्दाहकसंनिपातघ्नः ॥ २ ॥ पर्युषितधान्यसलिलं प्रातः
पीतं सशर्करं पुंसाम् । अन्तर्दाहं शमयति प्रवृद्धमपि तत्क्षणादेव ॥ ३ ॥ ब्राह्मी-
द्राक्षाजलधरवचोशीरशम्याकतिक्तापथ्याधात्रीकलितकबलानिम्बकोशातकीभिः ।
भूनिम्बाद्यो भवति सहितः पञ्चमूलीद्वयेन पीतः क्वाथः सकलपवनव्याधिरुग्दा-
हहन्ता ॥ ४ ॥ अगुरुघनसारसल्लककरुहनतनीरचन्दनैर्युक्तः । रुग्दाहसंनिपातं
निहन्ति मधुमिश्रितो धूपः ॥ ५ ॥ निर्गुण्डीपुरसहितः सिद्धार्थकनिम्बसंयुक्तः ।
सर्जरसेन समेतो धूपो रुग्दाहकं हन्ति ॥ ६ ॥ पयोधराभ्यां कुशलां सुरूपां

दीतं स्वेदहरं परम् ॥ ८ ॥ अथवा चणका भृष्टा यवानीचूर्णमिश्रिताः । वचोरणरजोयुक्ताः स्वेदसंरोधणा मताः ॥ ९ ॥

## अथ संनिपाते जिह्वायां लेपः ।

उत्स्फुटितां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया । प्रलेपयेत्ससृतया संनिपातात्मके ज्वरे ॥ १ ॥ सुवर्णमुक्ताफलजातप्रवालैः कस्तूरिकाकुङ्कुमरोचनं च । वराटद्राक्षमधूकबिल्वं कुष्ठं च खर्जूरपुनर्नवा च ॥ २ ॥ द्राक्षा कणा नागरसुत्रजीवं सारङ्गशृङ्गं कतकस्य बीजं । एरण्डमूलं खरसर्षपं च मयूरिका श्वेतपुनर्नवा च । स्तन्येन पिष्ट्वा कुरु संनिपाते लेपं सदा सर्वगदं निहन्ति ॥ ३ ॥ अथ पंचमुष्टिकयूषः—यवकोलकुलित्थानां मुद्गमूलकयोरपि । एकैकं मुष्टिमादाय पचेदष्टगुणे जले ॥ ४ ॥ पञ्चमुष्टिक इत्येष वातपित्तकफापहः । श्वासे गुल्मशूले च शोषे कासे क्षये ज्वरे ॥ ५ ॥

## अथ सप्तमुष्टिकयूषः ।

कुलित्थयवकोलैश्च मुद्गमूलकशुष्ककैः । शुण्ठीधान्यकयुक्तैश्च यूषः श्लेष्मानिलापहः । सप्तमुष्टिक इत्येष संनिपातज्वरापहः ॥ १ ॥

## अथ सिद्धार्थादिप्रलेपकः ।

सिद्धार्थको वचा हिङ्गु करञ्जः सुरदारु च । मञ्जिष्ठा त्रिफला श्वेता कटभी त्वक्कटुत्रयम् ॥ १ ॥ प्रियङ्गुश्च शिरीषं च निशा दार्वी समांशतः । अजामूत्रेण संपिष्टो गोमूत्रेणाऽथ चूर्णितः । सर्वज्वरे निहन्त्याशु सिद्धार्थादिप्रलेपकः ॥ २ ॥

## अथ क्वाथः ।

भार्ङ्गीभूनिम्बनिम्बैर्घनकटुकवचाब्धोपयासाविशालारास्नानन्तापटोलीसुरतरुरजनीपाठलाकुण्डुकैश्च । माद्रीदार्वीगुडूचीत्रिवृदतिविषिकापुष्करत्रायमाणेन्द्रयोग्रीसिंहीकलिङ्गैस्त्रिफलवनशिवैः कल्पितस्तुल्यभागैः ॥ १ ॥ क्वाथो द्वात्रिंशदाख्यः कफपित्तकदशमहासंनिपाताभिहन्याच्छूलं कासादिहिक्काश्वसनगुदरुजाध्मानविध्वंसकारी । ऊरुस्तम्भान्त्रवृद्धिं गलगदमरुचिं सर्वसंधिप्रहार्तिं मातङ्गं यो निहन्यान्मृगरिपुरिव चेद्रोगजालं तथैव ॥ इति द्वात्रिंशदङ्गः ॥ २ ॥ भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रबीजघनिकेभकणाकषायः । तन्द्राप्रलापकसमारुचिदाहमोहश्वासादियुक्तमखिलज्वरमाशु हन्यात् ॥ ३ ॥ इत्यष्टादशाङ्गः ॥ क्षुद्रापौष्करभूनिम्बगुडूचीविश्वभेषजैः । पञ्चतिक्तकनामाऽयं क्वाथो हन्त्यष्टधाज्वरम् ॥ ४ ॥ अथान्यच्च —दार्व्यब्दकुष्ठतिक्तफलत्रिकं च क्षुद्रा पटोली रजनी च निम्बः । क्वाथं विदध्याज्ज्वरसंनिपाते निश्चेतने पुंसि विबोधनार्थम् ॥ ५ ॥

कफप्रधानसंनिपाते—ग्रन्थीन्द्रजामरतरुक्रिमिशत्रुभार्ङ्गीभृङ्गत्रिकट्वनलकटुफलपौष्कराणाम् । रास्नाभयाबृहतिकाद्वयदीप्यभूतकेशीकिरातकवचाचविकाशृङ्गीणाम् ॥ ६ ॥ क्वाथो हन्यात्संनिपातान्समग्रान्बुद्धिभ्रंशं स्वेदशैत्यप्रलापान् । शूलाध्मानं विद्रधिं श्लेष्मवातान्वातव्याधीन्सूतिकानां च सद्यः ॥ ७ ॥

वातप्रधानसंनिपाते—अर्कानन्ताकिराताऽमरतरुरसनासिन्दुवारोग्रगन्धातर्कारीशिग्रुपञ्चोषणघुणदयितामार्कवाणां कषायः । सद्यस्त्रीमांस्त्रिदोषानपहरति धनुर्मारुतं दन्तबन्धं शैत्यं गात्रेषु गाढं श्वसनकसनकं सूतिकावातरोगान् ॥ ८ ॥ अन्यच्च अर्कग्रन्थिकशिग्रुदारुचविकानिर्गुण्डिका पिप्पली रास्नाभृङ्गपुनर्नवानलदघाभूनिम्बशुण्ठीकृतः । क्वाथः संहरति त्रिदोषमखिलं स्वापानिलं सूतिकानानामारुतशैत्यशान्तिकृदपस्मारस्मारत्र्यम्बकः ॥ ९ ॥ बिल्वोऽग्निमन्थः स्योनाकः काश्मरी पाटला स्थिरा । त्रिकण्टकः पृश्निपर्णी बृहती कण्टकारिका ॥१०॥ दशमूलमिदं श्वाससंनिपातज्वरापहम् । दशमूली शठी शृङ्गी पौष्करं सदुरालभम् ॥ ११ ॥ शुण्ठी कुटजबीजं च पटोलं कटुरोहिणी । अष्टादशाङ्ग इत्येष संनिपातज्वरापहः ॥ कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥ १२ ॥ इति दशमूलाद्यष्टादशाङ्गः । कुष्ठं तिक्तकं काण्डं भार्ङ्गी घातिविषा तथा । नरमूत्रेण च क्वाथः संनिपाते सुदारुणे ॥ १३ ॥ इति कुष्ठादिः ।

## अथ संधिकादीनां चिकित्सा ।

संधिके हितमस्ति लङ्घनविधिस्वेदोपनाहादिकं रूक्षं कर्म समग्रमेव विहितं कुर्याद्यवागूरसम् । मूलीपञ्चककल्ककल्पितमिदं सन्मागधीमिश्रितं कौलत्थेन रसेन सैन्धवयुतं पेयं च विश्वौषधम् ॥ १ ॥ रास्नागुडूचीशठिवृद्धदारुसुराह्वविश्वाग्निफलावरीभिः । क्वाथं पिबेद्गुग्गुलुसंप्रयुक्तं समस्तसंधिग्रहसंनिपाते ॥ २ ॥ रास्नाशुण्ठीगुडूचीसहचरजलदाभीरुपथ्यासुराह्वैस्तिक्ताकर्पूरवासानिलरिपुसहितैः पञ्चमूलीद्वयेन । एभिर्द्रव्यैः कषायस्त्वरितमपहरेत्पीतमात्रः प्रभावे मन्यास्तम्भावबाहुं ज्वरपिटककटीसंधिसर्वाङ्गपीडाः ॥ ३ ॥ अमृतोरुबूकविश्वासुरतरुराजाहरीतकीक्वाथः । सकलसमीरणरोगान्प्रातः सद्यो हरेत्पीतः ॥ ४ ॥ ग्रन्थिककलितरुपथ्याकृतमालशिवादरूपकैर्विहितः । एरण्डतैलयुक्तः क्वाथो हन्यान्मरुत्सान्द्रम् ॥ ५ ॥ इति संधिकचिकित्सा ॥

अथान्तकस्यासाध्यत्वादौषधं नास्ति ॥

## अथ रुग्दाहस्य चिकित्सा ।

जलधरमलयजनागरसवालकोशीरपर्पटैः क्वथितम् । यः पिबति पयः शीतं शाम्यति रुग्दाहकस्तस्य ॥ १ ॥ बदरीपल्लवलेपः श्रीखण्डारिष्टफेनसंयुक्तः । दातव्यः पदतलयो रुग्दाहकसंनिपातघ्नः ॥ २ ॥ पर्युषितधान्यसलिलं प्रातः पीतं सशर्करं पुंसाम् । अन्तर्दाहं शमयति प्रवृद्धमपि तत्क्षणादेव ॥ ३ ॥ ब्राह्मीद्राक्षाजलधरवचोशीरशम्याकतिक्तापथ्याधात्रीकलितरुबलानिम्बकोशातकीभिः । भूनिम्बाद्यो भवति सहितः पञ्चमूलीद्वयेन पीतः क्वाथः सकलपवनव्याधिरुग्दाहहन्ता ॥ ४ ॥ अगुरुघनसारसल्लककरहनतनीरचन्दनैर्युक्तः । रुग्दाहसंनिपातं निहन्ति मधुमिश्रितो धूपः ॥ ५ ॥ निर्गुण्डीपुरसहितः सिद्धार्थकनिम्बसंयुक्तः । सर्जरसेन समेतो धूपो रुग्दाहकं हन्ति ॥ ६ ॥ पयोधराभ्यां कुशलां सुरूपां

नवयौवनाम् । प्रमदां स्वभुजाश्लेषैर्मेजेत्तुड्दाहमूर्छितः ॥ ७ ॥ प्रह्लादं चास्य विज्ञाय तां स्त्रीमपनयेत् पुनः ॥ हितं च भोजयेदन्नं येनाप्नोति सुखं महत् ॥ ८ ॥ प्रह्लादं कामकृतहर्यं इति भावप्रकाशात् ॥ इति रुद्दाहकचिकित्सा ॥

## अथ चित्तविभ्रमचिकित्सा ।

पथ्यापर्पटकटुकामृद्वीकादारुजलदभूनिम्बाः । शम्याकपटोलशिवाक्वाथश्चित्तभ्रमं हन्ति ॥ १ ॥ हरीतकीपर्पटहारहूराशम्बूकपुष्पीकटुकापयोदैः । शम्याकदेवाह्वयभारतीभिश्चित्तभ्रमं हन्ति कृतः कषायः ॥ २ ॥ कणोपणोमालवणोषमानि करंजबीजं प्रमदामलानि । पथ्याक्षसिद्धार्थकहिंगुशुंठीयुतानि बस्तांबुविमिश्रितानि ॥ ३ ॥ पिष्ट्वा गुटीयं नयने विधेया प्रचेतनेति प्रथितान्वितार्था । चित्तभ्रमापस्मृतिभूतदोषशिरोक्षिरोगभ्रमनाशहेतुः ॥ ४ ॥ इति भावप्रकाशात् ॥ इति चित्तविभ्रमचिकित्सा ।

शीताङ्गसंनिपातोऽसाध्यः ॥ शीतांगस्य चिकित्सा—भास्वन्मूलं जीरकव्योषभार्ङ्गी व्याघ्री शुंठी पुष्करं गोजलेन । सिद्धं सद्यः शीतगात्रार्तिमोहश्वासश्लेष्मारेप्रेककासाविहंति ॥ १ ॥ भास्वन्मूलं अर्कमूलं ॥ रसविषमरिचमहेशप्रियफलभसैकभूषतुर्यसुभिः । भागैर्मितमुद्धूलनमिदमतिस्येदशैत्यहरं ॥ २ ॥ इति भावप्रकाशात् ॥

## अथ तन्द्रिकचिकित्सा ।

ज्वरे प्रथमसुत्पन्ने चक्षुर्भ्यां नैव पश्यति । तन्द्रिकः संनिपातोऽयं कष्टसाध्यो भवेत्ततः ॥ १ ॥ भार्ङ्गीपुष्करपथ्यानिदिग्धिकानागरामृताक्वाथः । अपनयति तन्द्रिकमिमं निःसंशयं प्रगे पीतः ॥ २ ॥ रास्नामलःशिलैकाअमभेतत्तन्द्रिकेऽपीष्टम् । अमृतापटोलवासाव्योषयुतस्तन्द्रिके क्वाथः ॥ ३ ॥ कुष्ठगवाक्षीनागरमरिचनिशाद्वयपचाकणामुस्तम् । बस्तसलिलेन पिष्टं तन्द्रिकजित् भवेदञ्जनम् ॥ ४ ॥ इति तन्द्रिकचिकित्सा ।

## अथ कण्ठकुब्जचिकित्सा ।

त्रिकटुकफलिनीकटुकाहरीतकीविभीतकामलकैः । ध्वंसयति कण्ठकुब्जं धूपरजनीद्वययुक्तः क्वाथः ॥ १ ॥ शृङ्गीवत्सकचेतकीघनशठीभूनिम्बभार्ङ्गीनिशासिन्धुपुष्करचित्रकैः समरिचैर्व्याघ्रीयूपामिश्रितैः । धात्रीदारुविभीतकैश्च चविकाविश्वाकणाकट्फलैः पीतः कृन्तति कण्ठकुब्जमचिरात्क्वोष्णः कषायस्त्विह ॥ २ ॥ अपनयति कण्ठकुब्जे कृष्णापामार्गबीजदं नस्यम् । अथ हन्ति सलिलसहितं त्रिकटुकटुकत्रिवृन्नीनस्यम् ॥ ३ ॥ इति कण्ठकुब्जचिकित्सा ।

## अथ कर्णकस्य चिकित्सा ।

रक्तस्रावो जलौकाभिर्धूमपानं च युज्यते । कर्णग्रन्थिविनाशार्थमायुर्वेदविदां वरः ॥ १ ॥ तत्र रक्तं हरेत्क्षिप्रं जलौकाभिरनन्तरम् । त्रिफलासर्पिषः पानं कार्यं

र्णघृतस्य च ॥ २ ॥ प्रदेहा कफपित्तघ्नाः कार्याः संशमनानि च। मुद्गपर्ण- नेभा पृष्ठे रक्तवर्णा तथोदरे। षडङ्गुलप्रमाणेन जलौका भद्रिका मता ॥ ३ ॥ ग्राक्षाबृहतीपथ्याव्योपकटुकाघनपुष्कराह्वैश्च। श्लेष्मधाराभाङ्गीक्वाथः कर्णकरुजं हरेत्पानात् ॥ ४ ॥ मरीचदशमूलमगधाफलत्रयनिशामहौषधीतिक्ताः। भूनिम्ब- सैन्धवयुतः कर्णकहन्ता भवेत्क्वाथः ॥ ५ ॥ हिङ्गुद्विनिशविशालासैन्धवसुरदारु- कुठरविडुर्धैः। दत्तः क्रमेण लेपो हन्ति महाकर्णकग्रन्थिम् ॥ ६ ॥ दशशतकर- दुग्धारुष्करत्वक्समेतं दहनगुडनिकुम्भाकुष्ठकासीसयुक्तम्। अपनयति वितीर्णं लेपनं सत्वराग्राक्षुथुहरणयुक्तं कर्णकग्रन्थिमेतत् ॥ ७ ॥ अशिशिरजलयुक्तं नावनं कर्णकार्तो जनयति सुखसिद्धिं घ्राणरन्ध्रप्रवेशात्। लवणपरमकृष्णाचूर्ण- युक्तं प्रभाते सकलमुनिभिरुक्तं व्याधिविध्वंसकारि ॥ ८ ॥ दन्तीचित्रकयोर्मूलं स्नुह्यर्कपयसी गुडः। भल्लातकास्थि कासीसं लेपो भवति कर्णके ॥ ९ ॥ सना- गरं देवदारुरास्नाचित्रकपेषितम्। प्रलेपनमिदं श्रेष्ठं गलशोथविनाशनम् ॥ १० ॥ कुलित्थः कट्फलं शुण्ठी कारवी च समांशकैः। सुखोष्णं लेपनं कार्यं कर्णमूले मुहुर्मुहुः ॥ ११ ॥ इति कुलित्थादिलेपः। बीजपूरकमूलत्वग्वह्निमन्थस्तथैव च। दारुमुह्यादिशीशुम्बीसकृष्णाविषमुष्टिभिः ॥ १२ ॥ प्रलेपो वा हिङ्गिम्बीभिः श्वयथौ कर्णमूलजे। वज्रमुष्टिभवः कल्कः शोथविध्वंसनक्षमः ॥ १३ ॥ कर्कटस्य च मांसेन सेवनं बन्धनं तथा। कर्णमूलभवं शोथं नाशयत्यविलम्बितम् ॥ १४ ॥ सिद्धार्थसैन्धववचागृहधूमविश्वैः पिष्टैर्जलेन निशया सहितश्च सूक्ष्मम्। लेपो हितो रुधिरनिष्क्रमणप्रतीतशोफव्रणस्य शमनः सहजश्च कर्णे ॥ १५ ॥ इति कर्ण- कचिकित्सा।

## अथ भुग्ननेत्रचिकित्सा।

दार्व्यम्बुदात्रिफलत्रिकं च क्षुद्रा पटोली रजनी सनिम्बा। क्वाथं विदध्या- ज्ज्वरसंनिपाते निश्चेतने पुंसि विबोधनार्थम् ॥ १ ॥ भूनिम्बमाक्षिकवचासहितं कुर्याल्लेहं कणोपणरसोनसुराजिकाभिः। नेत्राञ्जनं च लवणोत्तमपिप्पलीभ्यां नस्यं वचामरिचहिङ्गुमधूकसारैः ॥ २ ॥ मरिचतुरगगन्धामागधीसिन्धुजातं लशुनमधुकसारैरुग्रगन्धार्द्रकाभ्याम्। छगलकजलपिष्टः संयुतः शाङ्गबिन्दुः सपदि भवति नस्यो भुग्ननेत्रप्रमाथी ॥ ३ ॥ इति भुग्ननेत्रचिकित्सा।

## अथ रक्तष्ठीविचिकित्सा।

पर्पटधन्वयवासकवासाभूस्तृणकैः कटुकीफलिनीभ्याम्। शर्करया सहितोऽपि कषायो लोहितमास्यगतं विनिहन्ति ॥ १ ॥ जलदाह्वयपद्मकपर्पटकैर्मलयोद्भव- जातिवरीमधुकैः। मधुनिम्बप्रलानलचन्दनकैः क्वथितं मुखरक्तहरं सलिलम् ॥ २ ॥ इति रक्तष्ठीविचिकित्सा।

## अथ प्रलापकचिकित्सा।

तगरतुरगगन्धा पर्पटी शङ्खपुष्पी त्रिदशविटपितिक्ता

मालश्वेतकीगोस्तनीभ्यां सह हरति कषायो मंक्षु पामाप्रलापम् ॥ १ ॥
मूलं वारि शुण्ठीसमेतं मलयजकृतमालं वालकं पर्पटं च । समधरण-
ाय एष प्रभाते शमयति समुदीर्णं पीतमात्रः प्रलापम् ॥ २ ॥ इति
कित्सा ।

## अथ जिह्वकचिकित्सा ।

ागरपुष्करैः सकटुके रास्नागुडूचीयुतैर्भार्ङ्गीकण्टकारिकाशठिसमैर्दुःस्प-
: । पीतं जिह्वकहारि वारि भवति भार्ङ्गीवचामिश्रितैः प्रोक्तं वैद्यवरेण
रभूनिम्बमिश्रं शृतम् ॥ १ ॥ सुरतरुकटुनिम्बैरक्षपथ्यापटोलैरजनि-
ासिंहिकापुष्कराद्यैः । सलिलधरगुडूचीवासकैः सर्वमेभिः प्रशमयति
जेह्वकं कष्टसाध्यम् ॥ २ ॥ तीक्ष्णद्रव्यैः सलवणैर्मातुलुङ्गरसप्लुतैः ।
। सकृल्लेपः कटुतीक्ष्णेन संयुतैः ॥ ३ ॥ इति जिह्वकचिकित्सा ।

## अथाभिन्यासचिकित्सा ।

ागरसहितं भृङ्गरसाम्लं विलेहयेत्प्रातः । अथ कटुतिक्तोपयुतं भवति
नं तस्य ॥ १ ॥ मरिचलवणकृष्णामूतकेशीमधूकैः कटुफलमधु कृत्वा
ा नस्यः । प्रकटयति विकीर्णश्चाष्टभिर्वा चतुर्भिः सकलकरणबोधं चिन्तु-
र: ॥ २ ॥ लशुनमरिचकृष्णामागधीमन्योग्रगन्धायुक्तरफलधीजैर्विम-
:। कफपवनविकारे रक्तपित्तप्रभेदे गदिसमगदविज्ञैर्नस्यरोधनं स्यात्
ज्ञा यस्य न जायते चरणयोर्द्वंद्वं समादह्यते भाले लोहशलाकया
सर्वक्रियाकर्मणि । भार्ङ्गीधन्यवयासपुष्करजटाभार्ङ्गीशठीसिंहिकाक्वाथः
रतः कफहरोऽभिन्यासविध्वंसकः ॥ ४ ॥ त्रायन्तीरजमूलपुष्करजटावा-
कारवी भार्ङ्गी स्यादमृताटरूषकशठीगोमूत्रसंयोजितैः । भार्ङ्गीत्र्योपयुग्म-
वराद्युष्णः कषायो हरेत्सोभिन्यासगदं कफज्वरहरो निःसंशयं पानतः
मञ्जिष्ठाशिग्रुयवासबिल्वकशठीशुण्ठीकरञ्जानिशात्रायन्तीबृहतीवृषोषण-
स्तु पेपीयते । यैः प्रातः प्रणिधाय लक्षितगदैः संदेहराद्संनिधौ
प्रशमं भजन्ति सहसा सर्वाङ्गजा व्याधयः ॥ ६ ॥ सुरभिसलिलयुक्तः
ीफलाभ्यां भयरलवणयासाविश्वपाषाणभेदैः । पवनरिपुजटाभिः संयुतः
प्रतिदिनमपि पीतो हन्त्यभिन्यासशूलम् ॥ ७ ॥ भार्ङ्गीमध्वंभयाजाजी-
वपर्पटाः । देवदारुवचाकुष्ठयासकट्फलनागरैः ॥ ८ ॥ मुस्तधान्यकतिक्त-
ाहरेणुभिः । हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकैः ॥ ९ ॥ विशाला-
शठीबाकुचिकाफलैः । विडंगरजनीदार्वीयवानीद्वयसंयुतैः ॥ १० ॥
हितः क्वाथो हिंग्वार्द्रकरसान्वितः । अभिन्यासं ज्वरं घोरं हन्ति तंद्रां च
॥ ११ ॥ प्रमेहं कर्णशूलं च संनिपातांत्रयोदश । हिक्कां श्वासं च
तथा सर्वानुपद्रवान् ॥ १२ ॥ इति शृङ्ग्यादिः भावप्रकाशात् । अत्र
भार्ङ्ग्यादिक्वाथः पूर्वोक्तान्यौषधानि च देयानि ॥ यावच्च श्वसते जीवो

यावत्क्रामति भेषजम् । तावत्क्रिया प्रकर्तव्या दैवस्य कुटिला गतिः ॥ १३ ॥
इति त्रयोदशसंनिपातचिकित्सा ।

## अथाऽऽगन्तुज्वरचिकित्सा ।

अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् । दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडने ॥ १ ॥ भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः । जयेद्भूताभिषङ्गोत्थं मनःशान्त्या च मानसम् ॥ २ ॥ मधूकसारं मरिचं सैन्धवं पिप्पली वचा । संज्ञाप्रबोधनं नस्यं देयं भूतज्वरे सदा ॥ ३ ॥ अभिघातज्वरी कुर्यात्क्रियामुष्णविवर्जिताम् । कषायमधुरास्निग्धमाम्यथादोषमथापि वा ॥ ४ ॥ अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः । रक्तस्रुतेश्च सात्म्यैश्च तथा मांसरसौदनैः ॥ ५ ॥ वधबन्धसमावेशभग्नसमुद्भवान् । ज्वरानुपाचरेत्पूर्वं मदिराक्षीरभोजनैः ॥ ६ ॥ औषधीगन्धविषजौ विषपित्तप्रसादनैः । जयेत्कषायैर्मतिमान्सर्वगन्धकृतैर्भिषक् ॥ ७ ॥ क्रोधजे पित्तजित्काम्ये नार्यः सद्वाक्यमेव च । आश्वासनेष्टलाभेन वायोः प्रशमनेन च ॥ ८ ॥ हर्षेण च शमं यान्ति कामशोकभयज्वराः । व्याघ्रचित्रकघातार्थं स्थापयेज्जलमध्यगम् ॥ ९ ॥ अनया शीतक्रियया भयरोगः प्रशाम्यति । कामात्क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः । याति ताभ्यामुभाभ्यां वा भयशोकसमुत्थितः ॥ १० ॥ इत्यागन्तुकज्वरचिकित्सा ।

## अथ विषमज्वरः ।

दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम् । शीतपूर्वः स विज्ञेयो दाहपूर्वो निरन्तरम् ॥ १ ॥ आसक्तमुक्तौ कृशासाश्रयाणां विमुक्तपथ्याद्युचितक्रियाणाम् । अल्पोऽपि दोषो विषमं विदध्याज्ज्वरं प्रवृद्धं प्रतिपक्षरुद्धम् ॥ २ ॥ एकद्वित्रिचतुर्थः स्याद्विषमोऽन्यस्तु जीर्णकः । एते पञ्च ज्वराः पीडां यान्त्येव बहुवासरम् ॥ ३ ॥ विषमज्वरनाशाय चिकित्सा वक्ष्यतेऽधुना । वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः ॥ ४ ॥ स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् । विरेचनेन पयसा सर्पिषा संस्कृतेन च ॥ ५ ॥ विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् । वमनं पाचनं रूक्षमन्नपानं च लङ्घनम् ॥ ६ ॥ कषायोष्णं च विषमज्वरे शस्तं कफोत्तरे । त्रायन्तीकटुकानन्तासारिवाभिः शृतं जलम् ॥ ७ ॥ संतताख्ये ज्वरे देयं वातादीनां निवृत्तये । षोडशाष्टचतुर्भागं वातपित्तकफार्तिषु ॥ ८ ॥ क्षौद्रं कषाये दातव्यं विपरीतं तु शर्करा । वासापटोलत्रिफलाद्राक्षाशम्याकनिम्बजः । समधुः ससितः क्वाथो हन्यादैकाहिकं ज्वरम् ॥ ९ ॥ इति वासादिः । उलूकदक्षिणः पक्षः सितसूत्रेण वेष्टितः । धारणाद्वामकर्णे हरत्यैकाहिकं ज्वरम् ॥ १० ॥ द्राक्षापटोलनिम्बाब्दशक्राह्वत्रिफलामृताः । जलं जंतुः पिबेच्छीतमन्येद्युर्ज्वरशान्तये ॥ ११ ॥ इति द्राक्षादिः । सशिशिरः सघनः समहौषधः सनलदः सकणः सपयोधरः । समधुशर्करएष कषायको जयति

१ धातुर्जातककर्पूरकङ्कोलागुरुकुङ्कुमम् । लवङ्गसहितं चैव सर्वगन्धं विनिर्दिशेत् ।

चालमृगाक्षि तृतीयकम् ॥ १ ॥ ऊर्णनाभिस्यजालेन कज्जलं ग्राहयेत्ततः । अञ्जयेन्नेत्रयुगलं त्र्याहिकं तु ज्वरं जयेत् ॥ २ ॥ वासाधात्रीस्थिरादारुधान्यनागरसाधितम् । सितामधुयुतं कुर्याच्चातुर्थिकनिवारणम् ॥ ३ ॥ पथ्यास्थिरानागरदेवदारुधात्रीवृपैरत्रकथितः कषायः । सितोपलामाक्षिकसंप्रयुक्तश्चातुर्थिकं हन्त्यचिरेण पीतः ॥ ४ ॥ चातुर्थिको गच्छति रामठस्य घृतेन जीर्णेन युतस्य नस्यात् । लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ५ ॥ अखण्डितशरत्कालकलानिधिसमानने । चातुर्थिकहरं नस्यं मुनिद्रुमदलाम्बुना ॥ ६ ॥ कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः । नस्ये सर्पिःसमायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ७ ॥ विभक्षेण एता देवी मूलिका कर्णबन्धनात् । चातुर्थिकं ज्वरं हन्ति द्रोणपुष्पीरसाञ्जनात् ॥ ८ ॥ कन्याकर्तितसूत्रेण त्वपामार्गस्य मूलिका । रवौ बद्धा ज्वरं हन्ति तृतीयकचतुर्थकम् ॥ ९ ॥ काकजङ्घा बला श्यामा भृङ्गराजोऽपमार्गकः । एकैकं पुष्ययोगेण बद्धा चातुर्थिकं हरेत् ॥ १० ॥ कृष्णाम्बरे दृढं बद्धो गुग्गुलुलूकपुच्छकः । धूपश्चातुर्थिकं हन्यात्तमः सूर्य इवोदितः ॥ ११ ॥ कुमारीमूलकल्कं पीत्वा कोष्णजलैर्वमेत् । विषमं तु ज्वरं हन्ति वमनेन चिरंतनम् ॥ १२ ॥ भवति विषमहन्त्री चेतकी क्षौद्रयुक्ता भवति विषमहन्त्री पिप्पली वर्धमाना । विषमरुजमजाजी हन्ति युक्ता गुडेन प्रशमयति तथाऽन्या सेव्यमाना गुडेन ॥ १३ ॥ त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पली वर्धमाना । अनुपिबति पयो यस्तस्य न श्वासकासज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ १४ ॥ क्षीरेण पिप्पलीर्भुक्त्वा क्षीरान्नं भुज्यते यतः । दशाहं पञ्चवृद्धिः स्यादपकर्षस्तथैव च ॥ १५ ॥ इति वर्धमानपिप्पलीयोगः ॥ सर्पिः क्षौद्रं शृतं क्षीरं पिप्पल्यः सितशर्करा ॥ १६ ॥ पिबेत्खजेन मथितं पञ्चसारमिति स्मृतम् । विषमज्वरहृद्रोगश्वासकासक्षयापहम् ॥ १७ ॥ इति पञ्चसारम् ॥ निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम् । जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥ १ ॥ पटोलयष्टीमधुतिक्तरोहिणीघनाभयाभिर्विषमज्वरघ्नः । कृतः कषायस्त्रिफलामृतावृषैः पृथक्पृथग्वा विषमज्वरापहः ॥ २ ॥ इति पटोलपञ्चकं वा त्रिफलादित्रयम् । द्राक्षाल्वक्शुण्ठीत्वग्धनिका च हरीतकी । मिसी मुस्ताऽमृता चैव कृतमालकपाचकः ॥ १ ॥ वातपित्तज्वरं हन्ति पाचनो वह्निदीपनः । दशभिश्चौषधैरेतैः सर्वज्वरविनाशनः ॥ १ ॥ ग्रन्थान्तरे—भार्ङ्गीद्वपर्पटकधन्वयवासविश्वभूनिम्बकुटकणासिद्धामृताकषायः । जीर्णज्वरं सततसन्ततकौ निहन्यादन्येद्युकं सहतृतीयचतुर्थकौ च ॥ १ ॥ भार्ङ्गीपर्पटविश्ववासककणाभूनिम्बनिम्बामृतामुस्ताधन्वयमेषजैस्तु दशभिर्हन्तीह सर्वज्वरान् । जीर्णान्धातुगतांस्तथा च विषमान्सोपद्रवान्दारुणान्क्वाथोऽयं यदि युग्मवासरमितं दत्तो यमाद्रक्षति ॥ २ ॥ इति भार्ङ्ग्यादिः ॥ याव्याधुर्यजिताऽमृतेऽमृतलता लक्ष्मीशिवाभे शिवा विश्वा विश्वकरे घनो घनकुचे सिंही च सिंहोदरि । एभिः पञ्चभिरौषधैर्मधुकणायुक्तः कषायः कृतः पीतश्चेद्विषमज्वरः किमु तदा तन्वङ्गि न क्षीयते ॥१॥



अचले कृतकामचले चपले चलदक्षमले खलु रसकले । अमृताब्दशिवं मधुमद्विपमे विषमेषुविलासरते सुतनु ॥ २ ॥ द्राक्षामृतानागरतोयमुष्णं कृष्णाविपाकं बहुरोगनिघ्नम् । श्वासं च शूलं कसनं च मान्द्यं जीर्णज्वरं चैव जलेन तृष्णाम् ॥ ३ ॥ दुःस्पर्शोशीरसिंहीघनमधुकशिवाब्जाजिविश्वाटरूषच्छिन्नारेणूकषायः समधुमगधको चापितश्चाष्टमांशम् । दाहं स्वेदं च शोषं कृमिमथ रुधिरं शैत्यमुच्चान्तचित्तं श्वासं शूलं च तृष्णामहरहरसमं हन्ति चातुर्थिकाद्यम् ॥ ४ ॥ मुस्तामलकगुडूची विश्वौषधकण्टकारिकाक्वाथः । पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ ५ ॥ दार्वीदारुकलिङ्गलोहितलताशम्याकपाठाशटीशौण्डीविश्वकिरातवारणकणात्रायन्तिकापर्पटैः । उग्राधान्यकनागराब्दसरलैः शिग्रुस्वगम्भःशिवाव्याघ्रीपर्पटदर्भमूलकटुकानन्तामृतापौष्करैः ॥ ६ ॥ धातुस्थं विषमं त्रिदोषजनितं चैकाहिकं द्व्याहिकं क्वाथो हन्ति तृतीयकज्वरभयं चातुर्थिकं भूतजम् ॥ ७ ॥ इत्यारोग्यदर्पणतो दार्व्यादिः ॥ भृङ्गीरामठरामसेनरजनीरुग्रेणुकारोहिणीराजैरण्डरसोनदारुरजनीराजद्रुराजीफलैः । त्रायन्तीत्रिवृताहुताशननतानन्तामृतामुद्रितादन्तीतुम्बुरुचित्रतण्डुलमृदीरवकिराततंश्चरैः ॥ १ ॥ वासावरसकधीभवासवसुरायल्यावरीयच्छिन्नं ब्राह्मीब्राह्मणयष्टिवारणकणाविश्वायवस्थाभूपैः । मूर्वामालविकासमूलमगधामुस्ताजमोदाद्वयैर्मिश्रेयागुरुचन्दनेन्द्रयवविकारस्फोतायचाकद्फलैः ॥ २ ॥ इत्येतैर्देवमूलयुग्मिगदितः क्वाथश्चतुःषष्टिकः भृङ्ग्यादिर्मदनाहिसिंहभिषजा सर्वामयोन्मूलने । पुंसामष्टविधज्वरार्तिदमने मन्दाग्निसंधुक्षणे सर्वाङ्गेषु समीरणद्विपघटे शार्दूलविक्रीडितम् ॥ ३ ॥ इति चतुःषष्टिकः भृङ्ग्यादिः ॥ क्षुद्रानागरमुस्तपर्पटघनाभूनिम्बनिम्बामृताभार्ङ्गीचन्दनपुष्कराह्वकुटजैस्तिक्ताटरूषान्वितैः । पथ्यास्येन्द्रयवान्वितैश्च रचितः क्वाथो निपीतः प्रगे शीताद्यं ज्वरमुच्छ्रितं तु विषमं त्रिदोषजम् ॥ १ ॥ इति क्षुद्रादिः ॥ शकाह्वदद्रुमवृषामृतानां निर्गुण्डिकाभृङ्गमहौषधानाम् । क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेताः ॥ १ ॥ रसोनकल्कं तैलेन सर्पिषा वा तिलैरपि । सेवितं विषमं हन्ति वातश्लेष्मगदानपि ॥ २ ॥ इति रसोनकल्कम् । रास्नानागरकृष्णानां कल्कमुष्णाम्बुना पिबेत् । श्वासकासाग्निमान्द्यघ्नं शीतज्वरहरं भवेत् ॥ १ ॥ जीरकं लशुनं व्योषं पाठां पिष्ट्वोष्णवारिणा । शीतज्वरस्याऽऽगमने पिबेद्गुडयुतेन च ॥ २ ॥ पीतो मरिचचूर्णेन तुलसीपत्रजो रसः । द्रोणपुष्पीरसो वाऽपि निहन्ति विषमज्वरान् ॥ ३ ॥ इति स्वरसः ॥ ज्वरेऽञ्जनं निशातैलकृष्णामरिचसैन्धवैः । वचाहरीतकीसर्पिर्धूपः स्याद्विषमज्वरे ॥ १ ॥ इत्यञ्जनधूपौ ॥ अजायाश्चर्मरोमाणि वचा कुष्ठं पलंकषा । निम्बपत्राणि मधु च धूपनं ज्वरनाशनम् ॥ १ ॥ इति धूपनम् ॥ सर्पत्वचा सर्षपहिङ्गुनिम्बपत्राण्यमीषां समचूर्णधूपः । विनिग्रहं राक्षसडाकिनीनां करोति रक्षां विषमज्वरस्य ॥ १ ॥ इति द्वितीयधूपः ॥ पलंकषा निम्बपत्रं वचा कुष्ठं हरीतकी । सर्षपाः सयवाः सर्पिर्धूमनं ज्वरनाशनम् ॥ १ ॥ इत्यष्टाङ्गधूपः ॥ कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकत्वग्वांसीवृषदंशविण्नखयचाकेशाहिनिर्मोचनैः ।

बालमृगाक्षि तृतीयकम् ॥ १ ॥ ऊर्णनाभिस्थजालेन कज्जलं ग्राहयेत्ततः। अञ्जयेन्नेत्रयुगलं त्र्याहिकं तु ज्वरं जयेत् ॥ २ ॥ वासाधात्रीस्थिरादारुधान्यनागरसाधितम्। सितामधुयुतं कुर्याच्चातुर्थिकनिवारणम् ॥ ३ ॥ पथ्यास्थिरानागरदेवदारुधात्रीवृषैरक्वथितः कषायः। सितोपलामाक्षिकसंप्रयुक्तश्चातुर्थिकं हन्त्यचिरेण पीतः ॥ ४ ॥ चातुर्थिको गच्छति रामठस्य घृतेन जीर्णेन युतस्य नस्यात्। लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ५ ॥ अखण्डितशरत्कालकलानिधिसमानने। चातुर्थिकहरं नस्यं मुनिद्रुमदलाम्बुना ॥ ६ ॥ कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः। नस्ये सर्पिःसमायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ७ ॥ त्रिवृत्सूत्रेण धृता देवी मूलिका कर्णबन्धनात्। चातुर्थिकं ज्वरं हन्ति द्रोणपुष्पीरसाञ्जनात् ॥ ८ ॥ कन्याकर्तितसूत्रेण ह्यपामार्गस्य मूलिका। रवौ बद्धा ज्वरं हन्ति तृतीयकचतुर्थकम् ॥ ९ ॥ काकजङ्घा बला श्यामा भृङ्गराजोऽपमार्गकः। एकैकं पुष्ययोगेण बद्धा चातुर्थिकं हरेत् ॥ १० ॥ कृष्णाम्बरे दृढं बद्धो गुग्गुलुरुलूकपुच्छकः। धूपश्चातुर्थिकं हन्यात्तमः सूर्य इवोदितः ॥ ११ ॥ कुमारीमूलकल्कं पीत्वा कोष्णजलैर्वमेत्। विषमं तु ज्वरं हन्ति वमनेन चिरंतनम् ॥ १२ ॥ भवति विषमहन्त्री चेतकी क्षौद्रयुक्ता भवति विषमहन्त्री पिप्पली वर्धमाना। विषमरुजमजाजी हन्ति युक्ता गुडेन प्रशमयति तथाऽन्या सेव्यमाना गुडेन ॥ १३ ॥ त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पली वर्धमाना। अनुपिबति पयो वस्तस्य न श्वासकासज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ १४ ॥ क्षीरेण पिप्पलीर्भुक्त्वा क्षीरान्नं भुज्यते यतः। दशाहं पञ्चवृद्धिः स्यादपकर्षस्तथैव च ॥ १५ ॥ इति वर्धमानपिप्पलीयोगः ॥ सर्पिः क्षौद्रं शृतं क्षीरं पिप्पल्यः सितशर्करा ॥ १६ ॥ पिबेत्खजेन मथितं पञ्चसारमिति स्मृतम्। विषमज्वरहृद्रोगश्वासकासक्षयापहम् ॥ १७ ॥ इति पञ्चसारम् ॥ निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्। जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥ १ ॥ पटोलयष्टीमधुतिक्तरोहिणीघनाभयाभिर्विषमज्वरघ्नः। कृतः कषायस्त्रिफलामृतावृषैः पृथक्पृथग्वा विषमज्वरापहः ॥ २ ॥ इति पटोलपञ्चकं वा त्रिफलादित्रयम्। द्राक्षालवङ्गशुण्ठीरक्तधनिका च हरीतकी। मिसी मुस्ताऽमृता चैव कृतमालककषायकः ॥ १ ॥ वातपित्तज्वरं हन्ति पाचनो लघुदीपनः। दशभिश्चौषधैरेतैः सर्वज्वरविनाशनः ॥ १ ॥ अन्यान्तरे—भार्ङ्गीब्दपर्पटकधन्वयवासविश्वभूनिम्बकुटकणासिंह्यमृताकषायः। जीर्णज्वरं सततसन्ततकौ निहन्यादन्येद्युकं सहतृतीयचतुर्थकौ च ॥ १ ॥ भार्ङ्गीपर्पटविश्वचासककणाभूनिम्बनिम्बामृतामुस्ताधन्वयमेषजैस्तु दशभिर्हन्तीह सर्वज्वरान्। जीर्णान्धातुगतांस्तथा च विषमान्सोपद्रवान्दारुणान्क्वाथोऽयं यदि युग्मवासरमितं दत्तो यमाद्रक्षति ॥ २ ॥ इति भार्ङ्ग्यादिः ॥ वाञ्छाधुर्येजितामृतेऽमृतलता लक्ष्मीशिवासे शिवा विश्वा विश्वधरे घनो घनकुचे सिंही च सिंहोदरि। एभिः पञ्चभिरौषधैर्मधुकणायुक्तः कषायः कृतः पीतश्चेद्विषमज्वरः किमु सदा सन्वर्क्ति न क्षीयते ॥ १ ॥

## अथ भेडादिप्रणीतं सुदर्शनचूर्णम् ।

तालीसत्रिफलात्रुटीत्रिकटुकं त्वक्त्रायमाणाग्निमूर्वाग्रन्थिनिशायुगं शटिबला स्पृक्कण्टकारीयुगम् । मुस्तापर्पटनिम्बपुष्करजटाभार्ङ्गीयवानीहिमं चव्यं चित्रकपुण्डरीकतगरं सेव्यं विडङ्गं वचा ॥ १ ॥ वासो वत्सककुण्डलीन्द्रयवकं देवद्रुमं वालकं बीजं शिग्रुभवं पटोलकटुकापद्माह्वपत्रं विषा । काकोली मधु कुङ्कुमं च सतवक्षीरी लवङ्गं पृथक्पर्णीशैलजशालिपर्णिसहितं शामन्तकीपुष्पकम् ॥ २ ॥ सर्वं समं चूर्णयं तदर्धभागं कैरातकं श्रेष्ठतमं हि चूर्णम् । सुदर्शनं नाम महद्बलासामयोत्थान्हन्ति पृथक्कृतान्ज्वरान् ॥३॥ संसर्गजान्सकलजान्विषमाविहन्याद्वाद्भूतवान्यिपरकृतानभिघातजांश्च । सामान्समानसकृतानतिदाहयुक्ताञ्छीतांस्तृतीयकचतुर्थविपर्ययांश्च ॥४॥ ऐकाहिकान्द्व्याहिकसंनिपातशतानाविधान्पाक्षिकमासजातान् । गृहदाहमोहभ्रमदैन्यतन्द्रा सश्वासकासारुचिपाण्डुरोगान् ॥ ५ ॥ हलीमकं कामलपार्श्वशूलं पृष्ठोत्थं जानुभवं तथैव । त्रिकग्रहं वातविकारजातं विनाशयत्येव शिरोग्रहं च ॥ ६ ॥ नानाप्रदेशोद्भववारिदोषान्दूषीविषादिप्रभवान्विकारान् । क्षीणां रजोदोषसमुद्भवांश्च विनाशयेदुष्णजलेन पीतम् ॥ ७ ॥ शीताम्बुना पित्तभवान्विकारानाशुनीन्द्रैर्गदितं जगद्धितम् । सुदर्शनं दानवनाशनं यथा सुदर्शनं रोगविनाशनं तथा ॥ ८ ॥ इति भेडादिप्रणीतं सुदर्शनं चूर्णम् ॥

अथ शार्ङ्गधरात्—त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी । त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः ॥ १ ॥ कटुका पर्पटो मुस्ता त्रायमाणा च वालकम् । निम्बः पुष्करमूलं च मधुयष्टी च वत्सकः ॥ २ ॥ यवानीन्द्रयवा भार्ङ्गी शिग्रुबीजं सुराह्वजा । वचा त्वक्पद्मकोशीरचन्दनातिविषा बला ॥ ३ ॥ शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा । चित्रको देवदारुश्च चव्यं पत्रं पटोलजम् ॥ ४ ॥ जीवकर्षभकौ चैव लवङ्गं वंशलोचना । पुण्डरीकं च काकोली पत्रजं जातिपत्रकम् ॥ ५ ॥ तालीसपत्रं च तथा समभागानि चूर्णयेत् । सर्वचूर्णस्य चार्धांशं कैरातं प्रक्षिपेत्सुधीः ॥ ६ ॥ एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम् । ज्वरांश्च निखिलान्हन्याद्यत्र कार्या विचारणा ॥ ७ ॥ पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान्विषमज्वरान् । संनिपातोद्भवांश्चापि मानसानपि नाशयेत् ॥ ८ ॥ जीर्णज्वरैकाहिकादीन्मोहं तन्द्रां भ्रमं तृषाम् । श्वासं कासं च पाण्डुं च हृद्रोगं हन्ति कामलाम् ॥ ९ ॥ त्रिकपृष्ठकटीजानुपार्श्वशूलनिवारणम् । शीताम्बुना पिबेद्धीमान्सर्वज्वरनिवृत्तये ॥ १० ॥ सुदर्शनं यथा चक्रं दानवानां विनाशनम् । तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम् ॥ ११ ॥ इति सुदर्शनं चूर्णम् ॥

## अथ लवङ्गादिचूर्णम् ।

लवङ्गजातीफलपिप्पलीनां भागं प्रकल्प्याक्षसमानमेषाम् । पलार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥ १ ॥ सितासमं चूर्णमिदं प्रगृह्य रोगांश्च वातप्रभवान्निहन्ति । कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥२॥

धीर्योजसी तथा । पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ ३ ॥ अथ विशेषलक्षणमाह—शूनाक्षिकूटगण्डभ्रूः शूनपन्नाभिमेहनः । क्रिमिकोष्ठोऽतिसार्येत मलं चासृक्कफान्वितम् ॥ १ ॥

## अथासाध्यलक्षणमाह—

पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति । कालप्रकर्षाच्छूनाङ्गो यो वा पीतानि पश्यति ॥ १ ॥ बद्धाल्पविट्सहरितं सकफं योऽतिसार्यते । दीनः श्वेतोऽतिदिग्धाङ्गश्छर्दिमूर्छातृषान्वितः । स नास्त्यसृक्क्षयाद्यस्तु पाण्डुः श्वेतत्वमाप्नुयात् ॥ २ ॥ अन्यच्च—पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् । पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ १ ॥ अन्तेषु शूनं परिहीनमध्यं म्लानं तथाऽन्तेषु च मध्यशूनम् । गुदे च शेफस्यथ मुष्कयोश्च शूनं प्रताम्यंतमसंज्ञकल्पम् । विवर्जयेत्पाण्डुकिनं यशोर्थी तथाऽतिसारज्वरपीडितं च ॥ २ ॥ कामलाकारणमाह—पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते । तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ १ ॥

## कामलालक्षणमाह—

हारिद्रनेत्रः स भृशं हरिद्रत्वङ्नखाननः । रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ १ ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्शितः । कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥ २ ॥ कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला । कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ॥ ३ ॥ सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति । दाहारुचितृडानाहतन्द्रामोहसमन्वितः । नष्टाग्निसंज्ञः क्षिप्रं हि कामलायान्विपद्यते ॥ ४ ॥ छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः । नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ॥ ५ ॥

## अथ पाण्डुरोगावस्थायां हलीमकमाह—

यदा ॥ पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः । बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः । स्त्रीष्वहर्षोऽङ्गमर्दश्च सादस्तृष्णारुचिर्भ्रमः ॥ १ ॥ हलीमकं तदा तस्य विद्यादनिलपित्ततः । पानकीलक्षणमाह—संतापो भिन्नवर्चस्त्वं बहिरन्तश्च पीनता । पाण्डुता नेत्रयोर्यस्य पानकीलक्षणं भवेत् ॥ २ ॥ इति पाण्डुरोगकामलाहलीमकनिदानम् ।

## अथ पाण्डुरोगचिकित्सा ।

[साध्यं च पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् । संपादयेत्क्षौद्रघृतप्रगाढैर्हरीतकीलोहरजःप्रयोगैः ॥ १ ॥ पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वककल्कयुक्तम् । विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान्घृतेन ॥२॥ विधिः स्निग्धोऽत्र वातोत्थे तिक्तः शीतश्च पैत्तिके । श्लैष्मिके कटुरूक्षोष्णः कार्यो मिश्रस्तु मिश्रजे ॥ ३ ॥] द्विपञ्चमूलीकथितं सविश्वं कफात्मके पाण्डुगदे पिबेच्च । ज्वरेऽतिसारे श्वयथौ ग्रहण्यां कासेऽरुचौ कण्ठहृदामयेषु ॥ ४ ॥

त्रिकामृतावासातिक्तामूनिम्बनिम्बजः । क्वाथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ ५ ॥ पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः । सर्वाङ्गशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्ध्वककामयेषु ॥ ६ ॥

## अथ नवायसचूर्णम् ।

त्र्यूषणत्रिफलामुस्ताविडङ्गदहनाः समाः । नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा । भक्षयेत्पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥ १ ॥ इति नवायसचूर्णम् । लोहपात्रस्थितं क्षीरं सप्ताहं पथ्यभोजनः । पिबेत्पाण्ड्वामयी शोषी ग्रहणीदोषपीडितः ॥ १ ॥ दग्ध्वाऽक्षकाष्ठैर्मलमायसं ॥ गोमूत्रनिर्वापितसप्तवारम् । विचूर्ण्य लीढं मधुनाऽचिरेण तक्रेण वा पाण्डुगदं निहन्यात् ॥ इति वीरसिंहावलोकतः ॥ अतिशुद्धमयोभस्म घृतक्षौद्रयुतं लिहेत् । पाण्डुरोगस्य नाशाय कामलानां च सर्वशः ॥ १ ॥ नागरं लोहचूर्णं वा कृष्णां पथ्यामथाश्मजम् । गुग्गुलुं वाऽथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥ २ ॥ शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः । आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ ३ ॥ वृन्दात् । अमलतिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् । तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥ १ ॥

## अथ मण्डूरवटकाः ।

सुराह्वदार्वीकटुपद्ककलाप्यपेलं वारा चेति समांशचूर्णम् । मण्डूरभागद्वयमश्वमूत्रे पक्त्वा गवां तद्वटकाः सतक्राः ॥ १ ॥ कामलापाण्डुमेहार्शःशोथकुष्ठकफामयान् । ऊरुस्तम्भमजीर्णं च प्लीहानं नाशयन्ति च ॥ २ ॥ इति रसप्रदीपात् ।

## अथ मण्डूरवज्रवटकः ।

पञ्चकोलं समरिचं देवदारु फलत्रिकम् । विडङ्गमुस्तायुक्ताश्च भागास्त्रिपलसंमिताः ॥ १ ॥ यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः । पक्त्वाऽष्टगुणिते मूत्रे तद्घनीभूतमुद्धरेत् ॥ २ ॥ ततोऽक्षमात्रान्वटकान्पिबेत्तक्रेण तक्रभुक् । पाण्डुरोगं जयेत्सद्यम्मन्दाग्नित्वमरोचकम् ॥ ३ ॥ मण्डूरवज्रवटको रोगानीकप्रभेदनः । अर्शांसि ग्रहणीं शोफमूरुस्तम्भं हलीमकम् । कृमीन्प्लीहानमुदरं गलरोगं च नाशयेत् ॥ ४ ॥ इति वृन्दात् ॥

## अथ मण्डूरलवणम् ।

कृत्वाऽग्निवर्णं मलमायसं तु मूत्रे निषिञ्चेद्बहुशो गवां च । तथैव सिन्धूत्थसमं विपाच्यं निरुद्धधूमं च बिभीतकाग्नौ ॥ १ ॥ तक्रेण पीतं मधुनाऽथवापि बिभीतकास्यं लवणं प्रयुक्तम् । पाण्ड्वामयिभ्यो हितमेतदस्मात्पाण्ड्वामयघ्नं नहि किंचिदन्यत् ॥ २ ॥ इति योगतरङ्गिण्याः ॥

## अथ मधुमण्डूरः ।

गृहीत्वा त्रिपलप्रस्थमण्डूरभागं शृते त्रैफले मर्दयित्वा च यामम् । पुटे पाचयेद्यामयुग्मं कृशानौ पुटान्यत्र देयानि चन्द्राक्षिवारम् ॥ १ ॥ तथा धेनुमूत्रे

कुमारीरसे च विधेयश्च पञ्चामृते योगराजः । सर्वैस्त्रिभुनार्गैः पुटैः सिद्धिदोऽयमचिन्त्यप्रभावश्च मण्डूर एषः ॥ २ ॥ मधुमण्डुर एष कणामधुना चिरपाण्डुगदं ननु हेममितः । जनको रुधिरस्य निहन्ति परं विविधार्तिहरस्त्वनुपानबलैः ॥ ३ ॥

## अथ मण्डूराद्योऽरिष्टः ।

मण्डूरस्य ॥ शुद्धस्य तुलार्धं परिकीर्तितम् । तद्वल्लोहस्य पत्राणि तिलोत्सेधप्रमाणतः ॥ १ ॥ पुराणगुडपञ्चाशत्कोलप्रस्थत्रयं तथा । निकुम्भचित्रकाभ्यां च पले द्वे द्वे सुचूर्णिते ॥ २ ॥ पिप्पलीनां विडङ्गानां कुडवं कुडवं पृथक् । त्र्यंशापि त्रिफलाप्रस्थाञ्जलद्रोणे समावपेत् ॥ ३ ॥ अर्धमासस्थितो धान्ये पेयोऽरिष्टः प्रमाणतः । दोषानुभयतः शस्य पाण्डुरोगं नियच्छति ॥ ४ ॥ कृमीनर्शांसि कुष्ठं च कासश्वासकफामयान् । एषोऽरिष्टस्तु माण्डूरः सर्वपाण्ड्वामयापहः ॥ ५ ॥ इति गदनिग्रहान्मण्डूराद्योऽरिष्टः ॥

रेचनं कामलार्तस्य स्निग्धस्यादौ प्रयोजयेत् । ततः प्रशमनी कार्या क्रिया वैद्येन जानता ॥ १ ॥ पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके । मलानुसरणं दृष्ट्वा साऽपि कार्या भिषग्वरैः ॥ २ ॥ हरिद्रात्रिफलानिम्बबलामधुकसाधितम् । सक्षीरं माहिषं सर्पिः कामलापहमुत्तमम् ॥ ३ ॥ त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् । प्रातर्मधुयुतं वैद्यः कामलार्ताय योजयेत् ॥ ४ ॥ दार्वीसत्रिफलाव्योषविडङ्गानयसो रजः । मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान् ॥५॥ अयोरजो व्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा । सशर्करां कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी ॥ ६ ॥ धात्रीलोहरजोव्योषनिशाक्षौद्रं सशर्करम् । लीढं निवारयत्याशु कामलामुद्धतामपि ॥ ७ ॥ लोहचूर्णं निशायुग्मं त्रिफलां कटुरोहिणीम् । प्रलिह्य मधुसर्पिर्भ्यां कामलार्तः सुखी भवेत् ॥८॥ व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः । चूर्णितं सक्षमध्वाज्यकोष्णतोयपयोऽन्वितम् ॥९॥ कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम् । तुल्यं वाऽयोरजः पथ्यां हरिद्रां क्षौद्रसर्पिषा ॥ १० ॥ चूर्णितां कामली लिह्याद्गुडक्षौद्रेण वाऽभयाम् । पलाजीरकभूधात्रीसितागव्येन भावयेत् ॥ ११ ॥ प्रातः संसेवनं कुर्यात्कामलानाशनं परम् । निशाचूर्णं कर्षमितं दध्नः पलमितं सह ॥ १२ ॥ प्रातःसंसेवनं कुर्यात्कामलानाशनं परम् । अर्कमूलं हरेत्सत्यात्कामलां तण्डुलोदकैः ॥ १३ ॥ अञ्जनं कामलार्तस्य द्रोणपुष्पीरसेन तु । निशागैरिकधात्रीणां चूर्णं चोपरि लेपयेत् ॥ १४ ॥ गोदुग्धेन विशालाया मुनिसंख्यादलानि तु । जीरकेण युतं पेष्यं रसमेकं पलं पिबेत् ॥ १५ ॥ अथवा तत्समाद्राय कर्षार्धं दुग्धमिश्रितम् । पाययेत्तु प्रतिदिनमेवमेतद्दिनत्रयम् ॥ १६ ॥ घृतदुग्धौदनं पथ्यं कुर्यात्तु लवणं विना । कामलां नाशयत्याशु वायुरभ्रं हरेयथा ॥ १७ ॥

## अथ घृतानि ।

अथ गुडूचीघृतम्—गुडूचीस्वरसे सिद्धं सक्षीरं माहिषं घृतम् । चतुर्गुणेन पयसा पाययेत्तद्धलीमके ॥ १ ॥ इति गुडूचीघृतम् । व्योषं बिल्वं द्विरजनी त्रिफला द्विः पुनर्नवम् । मुस्ता ऽयोरजः पाठा विडङ्गं देवदारु च ॥ १ ॥ वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैर्घृतं शुभम् । सर्वान्प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ इति व्योषादिघृतम् ॥

## अथाऽऽमलक्यवलेहः ।

रसमामलकानां तु संशुद्धं वस्त्रपीडितम् । द्रोणं पचेत्तु मृद्वग्नौ तत्र चेमानि दापयेत् ॥ १ ॥ चूर्णितं पिप्पलीप्रस्थं मधुकं द्विपलं तथा । प्रस्थं गोस्तनिकायाश्च द्राक्षायाः द्रिल पेषितम् ॥ २ ॥ शृङ्गबेरपले द्वे तु तुगाक्षीर्याः पलद्वयम् । तुलार्धं शर्करायाश्च घनीभूतं समुद्धरेत् ॥ ३ ॥ मधुप्रस्थसमायुक्तं लेहयेत्पलसंमितम् । हलीमकं कामलां च पाण्डुत्वं चापकर्षति ॥ ४ ॥

इत्यामलक्यवलेहः ॥

## अथ त्रिफलाद्यवलेहः ।

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च । भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥ १ ॥ पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च । माक्षिकस्य च शुद्धस्य लोहस्य रजसस्तथा ॥ २ ॥ अष्टौ भागाः सितायास्तु तत्सर्वं मधुसंयुतम् । सूक्ष्मचूर्णं सुसंस्थाप्यमायसे भाजने शुभे ॥ ३ ॥ उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना । दिने दिने प्रयोक्तव्यं जीर्णे भोज्यं यथेप्सितम् ॥ ४ ॥ वर्जयित्वा कुलत्थांस्तु काकमाचीकपोतकान् । पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ ५ ॥ कुष्ठान्यजरकं मेहं श्वासं शोफमरोचकम् । विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ६ ॥ इति त्रिफलाद्यवलेहो योगतरङ्गिण्याः ॥ अथ हंसमण्डूरः—मण्डूरं चूर्णयेच्छ्लक्ष्णं गोमूत्रेऽष्टगुणे पचेत् । यवक्षोटं देवदारु मुस्ता व्योषं फलत्रयम् ॥ १ ॥ विडङ्गं स्यात्त्रिपलं पाकान्ते चूर्णितं क्षिपेत् । भक्षयेत्कर्षमात्रं च तक्रे तक्रं च भोजने ॥ २ ॥ पाण्डुं शोफं हलीमं च ऊरुस्तम्भं च कामलाम् । अर्शांसि हन्ति नो चित्रं हंसमण्डूरको ह्ययम् ॥ ३ ॥

## अथ मदेभसिंहसूतो रसः ।

काश्यपग्रन्थे—रसगन्धवराटताम्रशङ्खं विषवङ्गाभ्रककान्ततीक्ष्णमुण्डम् । अहिहिङ्गुलटङ्कणं समांशं सकलैः स्यात्त्रिगुणं पुराणकिट्टम् ॥ १ ॥ पशुमूत्रविशोधितं सुभृष्टं त्रिफलाभृङ्गरसाऽऽर्द्रकोत्थनीरैः । सुविशोष्य वरामृताजलिवासास्वरसैरष्टगुणैः पुनर्नवोत्थैः ॥ २ ॥ पृथगग्निकृतं घनं विपाच्य गुटिका गुञ्जमिता निजानुपानैः । ज्वरपाण्डुतृषाग्निपैत्यगुल्मक्षयकासस्वरमग्निसादमूर्च्छाम् ॥ ३ ॥ पवनादिषु दुस्तराष्टरोगान्सकलं पित्तहरं मदावृतं च । बहुना किमसौ यथार्थनामा सकलव्याधिहरो मदेभसिंहः ॥ ४ ॥ इति मदेभसिंहः ॥

## अथ त्रैलोक्यनाथरसः ।

पलानि चत्वारि रसस्य पञ्च गन्धस्य सत्त्वस्य गुडूचिकायाः । व्योषस्य चूर्णं
च तालमूल्याः सशाल्मलस्येह पलत्रयं स्यात् ॥ १ ॥ पृथक्पृथक्षट् गगन
चाष्टौ लोहस्य सर्वं त्रिफलाजलेन । घृष्टं चतुष्पष्टिदिनं तदर्धाः स्युर्भावना मो
चजद्रवस्य ॥ २ ॥ शिग्रुत्थनीरेण च षोडशाष्टौ तथा नलोत्थाद् गृहकन्यकाया
भार्ङ्गद्रवस्येति रसोऽयमुक्तः पाण्डुक्षयश्वासगदादिहर्ता ॥ क्षौद्रेण वा शर्क
घृतेन कर्षार्धमेतस्य भजेत्प्रयत्नात् ॥ ३ ॥

इति रसरत्नप्रदीपात् ॥

## अथ पथ्यापथ्यम् ।

यवगोधूमशाल्यन्नं रसैर्जाङ्गलजैः शुभैः । मुद्गाढकीमसूराद्यैः पाण्डौ भोज
स्यते ॥ १ ॥ वह्निमातपमायासमम्बुपानं च पित्तलम् । मैथुनं क्रोधसम्प
पाण्डुरोगी सदा त्यजेत् ॥ २ ॥ इति पाण्डुकामलाहलीमकचिकित्सा समास

## अथ रक्तपित्तनिदानम् ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः । तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभि
च ॥ १ ॥ कोद्रवोद्दालकैश्चाथैस्तद्गुणैरतिसेवितैः । पित्तं विदग्धं स्वगुणैर्वि
त्याशु शोणितम् ॥ २ ॥ ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा । आमा
याद् व्रजेदूर्ध्वमधः पक्वाशयाद् व्रजेत् ॥ ३ ॥ विदग्धयोर्द्वयोश्चापि द्विधाम
प्रवर्तते । ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ४ ॥ कुपितं रोमकूपै
समस्तैस्तत्प्रवर्तते । केचिच्च यकृतः प्लीह्नः प्रवदन्त्यसृजो गतिम् ॥ ५ ॥ पू
रूपं-सदनं शीतकामित्वं कण्ठधूमायनं वमिः । लोहगन्धिश्च निःश्वासो भव
स्मिन्भविष्यति ॥ ६ ॥ श्लैष्मिकमाह—सान्द्रं सपाण्डु सस्नेहं पिच्छिलं
कफात्मकम् । वातिकमाह—श्यावारुणं सफेनं च तनु रूक्षं च वाति
॥ ७ ॥ पैत्तिकमाह—रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् । मेचकाग
धूमाभमञ्जनाभं च पैत्तिकम् ॥ ८ ॥ संसर्गजसांनिपातिकमाह—सं
ष्टलिङ्गं संसर्गात्त्रिलिङ्गं सांनिपातिकम् । ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानु
॥ ९ ॥ द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ॥ साध्यासाध्यत्वमाह
ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ॥ १० ॥ एकमार्गं बलवतो नाति
नवोत्थितम् ॥ ११ ॥ रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् । एकदोषा
साध्यं द्विदोषं याप्यमुच्यते ॥ १२ ॥ त्रिदोषजमसाध्यं स्यान्मन्दाग्नेरतिवेगव
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १३ ॥ रक्तपित्तोपद्रवान
—दौर्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छा भुक्ते घोरो विदाहस्त्व
तिरपि सदा हृद्यतुल्या च पीडा । तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूति
ष्ठीवनत्वं भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥ १४ ॥ मांस
क्षालनाभं [illegible] वा मेदःपूयाभकल्पं

वा पक्वजम्बूफलाभम् । यत्कृष्णं यच्च नीलं गुडागनिकुणपं यच्च चोक्ता विकारा- स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १५ ॥ येन चोपहतो रक्तं रक्तपित्तेन मानवः । पश्येद् दृश्यं वियच्चापि तस्यास्साध्यमसंशयम् ॥ १६ ॥ लोहितं छर्दयेद्यस्तु सततं लोहितेक्षणः । लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १७ ॥ इति रक्तपित्तनिदानम् ॥

## अथातो रक्तपित्तचिकित्सां व्याख्यास्यामः ।

पित्तास्रं स्तम्भयेन्नाऽऽदौ प्रवृत्तं बलिनश्च्युतम् । हलीमपाण्डुग्रहणीरोगप्लीहगुल्मोदरादिकृत् ॥ १ ॥ क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् । अवाम्यमविरेच्यं च शमनैरुपाचरेत् ॥ २ ॥ अनिबद्धदोषस्य पूर्वं लोहितपित्तिनः । अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ ३ ॥ ऊर्ध्वगे रेचनं पूर्वमधोगे वमनं हितम् । आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाऽथवा ॥ ४ ॥ विरेचनं प्रयोक्तव्यं शर्करामाक्षिकोत्तरम् । मुस्तेन्द्रयवयष्ट्याह्वमदनाढ्यं पयो मधु ॥ ५ ॥ शिशिरं वमनं योज्यं रक्तपित्तहरं परम् । इति वृन्दात् ॥ द्राक्षा मधुककाश्मर्यसितायुक्तं विरेचनम् ॥ ६ ॥ यष्टीमधुकसंयुक्तं सक्षौद्रं वमनं हितम् । शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगमे । रक्ताग्निसादहन्ता च योज्यो विधिरतोऽपरः ॥ ७ ॥ पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः । हितानि पित्तानि च रक्तपित्ते धान्यान्यपि स्युः किल पित्तहानि ॥ ८ ॥ शालिषष्टिकनीवारकोरदूषप्रसाधिकाः । श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥ ९ ॥ मसूरमुद्गचणकाः समकुष्ठाढकीफलाः । प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥ १० ॥ दाडिमामलकं विद्वानम्लार्थं चापि दापयेत् । पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ॥ ११ ॥ शाकार्थं शाकसात्म्यानां तण्डुलीयादयो हिताः । पारावतकपोतांश्च लावान्रक्ताक्षवर्तकान् ॥ १२ ॥ शशाम्बरपिञ्जलैणान्हरिणान्कालपुच्छकान् । रक्तपित्तहरान्विद्याद्रसं तेषां प्रयोजयेत् ॥ १३ ॥ ईषदम्लाननम्लांश्च घृतभृष्टान्ससैन्धवान् । कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ॥ १४ ॥ पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः । जलं खर्जूरमृद्वीकामधुकैः सपरूषकैः ॥ १५ ॥ शृतशीतं प्रयोक्तव्यं तर्पणाय सशर्करम् । तर्पणं सघृतं क्षौद्रं लाजचूर्णैः प्रदापयेत् ॥ १६ ॥ ऊर्ध्वगं रक्तपित्तं तत्काले पीतं व्यपोहति । ह्रीवेरचन्दनोशीरमुस्तपर्पटकैः शृतम् । केवलं शृतशीतं वा दद्यात्तोयं पिपासवे ॥ १७ ॥ पयः सिताढ्यं शृतशीतमाजं गव्यं पयो वा प्रसमीक्ष्य वह्निम् । यष्टीमधूकार्जुनभावनीयं द्राक्षाबलागोक्षुरकैः शृतं वा ॥ १८ ॥ द्राक्षया फलिनीभिर्वा बलया नागरेण वा । श्वदंष्ट्रया शतावर्या रक्तजित्साधितं पयः ॥ १९ ॥ शृतेनाऽऽजेन पयसा संपिष्टं कुङ्कुमं पिबेत् । ऊर्ध्वरक्तविनाशाय तेनैवाऽऽजेन भोजनम् ॥ २० ॥ यष्टीमधुसमायुक्तं क्षीरं संक्वाथ्य शीतलम् । शर्करामधुसंमिश्रं रक्तपित्तापहं पिबेत् ॥ २१ ॥ क्षीरेण लाक्षां मधुमिश्रितेन प्रपीय जीर्णे पयसाऽन्नमद्यात् । सद्यो निहन्याद्रुधिरं

क्षतोत्थं फान्ताऽर्जुनानामथवाऽपि कल्कः ॥ २२ ॥ कल्कं मधूकत्रिफलार्जुना
निशि स्थितं लोहमये सुपात्रे । साज्यं विलिह्यात्तु पिबेत्सुशीतं सशर्करं छागप
क्षतार्तः ॥ २३ ॥ वृषपत्राणि निष्पीड्य रसं समधुशर्करम् । अनेन प्रशमं या
रक्तपित्तं सुदारुणम् ॥ २४ ॥ मध्वाटरूपकरसौ यदि तुल्यभागौ कृत्वा नरः पिब
पुण्यतरः प्रभाते । तद्रक्तपित्तमतिदारुणमप्यवश्यमाशु प्रशाम्यति जलै
वह्निपुञ्जः ॥ २५ ॥ इति राजमार्तण्डात् । आटरूपकनिर्यूहः प्रियङ्गुर्मृत्ति
ञ्जने । विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ २६ ॥ पिष्टानां वृषपत्रा
पुटपाको रसो हिमः । मधुयुक्तो जयेद्रक्तपित्तकासज्वरक्षयान् ॥ २७ ॥ ह
वासापुटपाकः । वासायां विद्यमानायामाशायां जीवितस्य च । रक्तपित्ती क्ष
कासी किमर्थमवसीदति ॥ २८ ॥ वासाकषायोत्पलमृत्प्रियङ्गुलोध्राञ्जनाम्
हृत्केसराणि । पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥ २९
आटरूपकमृद्वीकापथ्याक्वाथः सशर्करः । क्षौद्राढ्यः कसनश्वासरक्तपित्तनिबर्ह
॥ ३० ॥ मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन । ब
जले पर्युषितः कषायः स रक्तपित्तं शमयत्युदीर्णम् ॥ ३१ ॥ ह्रीवेरं धान्य
शुण्ठी चन्दनं मधुयष्टिका । वृषोशीरयुतः क्वाथः शर्करामधुयोजितः ॥ ३२ ॥ र
पित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा । उशीरं चन्दनं पाठा द्राक्षा मधुकपिप्प
॥ ३३ ॥ सक्षौद्रं पाययेत्क्वाथं रक्तपित्तं हरेद् ध्रुवम् । अमृता मधुकं चैव ख
गजपिप्पली ॥ ३४ ॥ क्वाथः क्षौद्रयुतो ह्येष रक्तपित्तविकारनुत् । चन्दने
यवौ पाठा कटुका सदुरालभा ॥ ३५ ॥ गुडूची वालकं लोध्रं पिप्पलीक्षौद्रसं
तम् । कफान्वितं जयेद्रक्तं तृष्णाकासज्वरापहम् ॥ ३६ ॥ शतावरी बला रा
काश्मर्यं सपरूपकम् । पाययेद्रक्तपित्तघ्नं सद्यः शूलहरं परम् ॥ ३७ ॥ त्रिफल
कृतमालभवं कमनं सितया मधुना मिलितं हरति । ननु शोणितपित्तरुजं विवि
धनदाहकपित्तजशूलदरम् ॥ ३८ ॥ अतसीकुसुमसमङ्गावटप्ररोहास्तृणाम्
पीताः । साधयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ३९ ॥ पक्वोदुम्बरकाश्म
पथ्याखर्जूरगोस्तनीः । मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक्पृथक् ॥ ४० ॥ र
सकस्वरसैः पथ्या सप्तधा परिभाविता । कृष्णा वा मधुना लीढा रक्तपित्तं
जयेत् ॥ ४१ ॥ द्रवेण यावता द्रव्यमेकीभूयाऽऽर्द्रतां भजेत् । तावत्प्रमा
निर्दिष्टं भिषग्भिर्भावनाविधौ ॥ ४२ ॥ अभया मधुसंयुक्ता पाचनी दीपनी मता
श्लेष्माणं रक्तपित्तं च हन्ति शूलातिसारजित् ॥ ४३ ॥ लोहगन्धनिभः श्वा
उद्गारे रक्तगन्धिनि । मृद्वीकोषणमात्रां तु खादेद्द्विगुणशर्कराम् ॥ ४४ ॥ उशी
कालीयकरोध्रपद्मकं प्रियङ्गुका कट्फलशङ्खगैरिकाः । पृथक्पृथक्चन्दनतुल्
भागिकाः सशर्करास्तण्डुलधावनप्लुताः ॥ ४५ ॥ रक्तं च पित्तं तमकं पिपास
दाहं च पीताः शमयन्ति सद्यः ॥ ४६ ॥ पलाशकल्कः क्वाथो वा सुशीतः श
रान्वितः । पिबेद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ ४७ ॥ सक्षौद्रं
रक्ते छिद्यमानावर्तं शकृत् । अतिनिःसृतरक्तो वा क्षौद्रेण रुधिरं पिबेत्

खदिरस्य प्रियङ्ग्वा कोविदारस्य शाल्मलेः । पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुत् ॥ ४९ ॥ अश्वत्थपत्राग्ररसात्षडंशो मोलोऽथ तस्माद् द्विगुणं मधु स्यात् । रक्तप्रवाहं हृदयस्थितं वा वातो यथाऽभ्रं हरते तथैव ॥ ५० ॥ मूलानि पुष्पाणि च मातुलुङ्ग्याः समं पिबेत्तण्डुलधावनेन । घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकयोः पयो वा । द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हितं वा ॥५१॥ उदुम्बराणि पक्वानि गुडेन मधुनाऽपि वा । उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम् ॥ ५२ ॥ नस्यं दाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा । आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥ ५३ ॥ हरीतकी दाडिमपुष्प-दूर्वा लाक्षारसो नस्यविधानयोगात् । निवारयत्येव चिरप्रवृत्तमप्याशु नासान्तरशोणितौघम् ॥ ५४ ॥ नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् । सेतुरिव रुधिरवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ ५५ ॥ प्रियङ्गुर्मृत्तिका लोध्रमञ्जनं चेति चूर्णयेत् । तच्चूर्णं योजयेत्तत्र नस्ये क्षौद्रसमन्वितम् ॥ ५६ ॥ नासिकामुखपायुभ्यो योनिमेढ्राच्च वेगितम् । रक्तपित्तस्रवं हन्ति सिद्ध एष प्रयोगराट् ॥ ५७ ॥ यत्र शस्त्रक्षते नैव रक्तं तिष्ठति वेगितम् । तदप्यनेन चूर्णेन तिष्ठत्येवावघूर्णितम् । मेढ्रतोऽतिप्रवृत्तेऽस्रे बस्तिरत्र इष्यते ॥ ५८ ॥

## अथ दूर्वाद्यं घृतम् ।

दूर्वामुत्पलकिञ्जल्कं मञ्जिष्ठां सैलवालुकाम् । सितां लोध्रमुशीरं च मुस्तं चन्दनपद्मके ॥ १ ॥ विपचेत्कार्षिकैः कल्कैर्घृतप्रस्थं सुखाग्निना । तण्डुलाम्बु ह्यजाक्षीरं दत्त्वा चैव चतुर्गुणम् ॥ २ ॥ तत्पानाद्वमतो रक्तं नावनान्नासिकागतम् । कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत् ॥ ३ ॥ चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी । मेढ्रपायुप्रवृत्तेषु बस्तिकर्म प्रकारयेत् । रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत् ॥ ४ ॥ इति दूर्वाद्यं घृतम् ॥

## अथ वासादिघृतम् ।

(वासां सशाखां सदलां समूलां कृत्वा कषायं कुसुमानि चास्याः । प्रदाय कल्कं विपचेद् घृतं च सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥ १ ॥ इति वासादिघृतम् । प्राणस्य कोविदारस्य वृषस्य ककुभस्य च । कल्कक्वाथस्य पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ २ ॥ इति वृन्दात् । असनस्य कोविदारस्य वृषस्य कुसुमस्य च । कल्कक्वाथप्रशंसन्ति पुष्पकल्कं चतुष्पलम् ॥ ३ ॥ इति योगतरङ्गिण्याः ॥)

## अथ शतावरीघृतम् ।

शतावरी दाडिमतिन्तिडीकं काकोलिकन्दं मधुकं विदारी । पिष्ट्वा च मूलं फलपूरकस्य पचेद्घृतं क्षीरचतुर्गुणं तत् । कासज्वरोन्मादविबन्धशूलं तद्रक्तपित्तं विविधं निहन्ति ॥ १ ॥ इति शतावरीघृतम् ॥

## अथ चन्दनादिचूर्णम् ।

चन्दनं नलदं लोध्रमुशीरं पद्मकेसरम् । नागपुष्पं च बिल्वं च भद्रमुस्तं सश-

करम् ॥ १ ॥ ह्रीवेरं चैव पाठा च कुटजोत्पलमेव च। शृङ्गवेरं सातिविषा धातकी सरसाञ्जनम् ॥ २ ॥ आम्रास्थिजम्बुसारास्थि तथा मोचरसोऽपि च। नीलोत्पलं समङ्गा च सूक्ष्मैला दाडिमत्वचः ॥ ३ ॥ चतुर्विंशतिरेतानि समभागानि कारयेत्। तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥ ४ ॥ योगं लोहितपित्तानामर्शसां गरिणां तथा। मूर्च्छामदोपसृष्टानां तृष्णार्तानां प्रदापयेत् ॥ ५ ॥ अतिसारं तथा छर्दिं स्त्रीणां चापि रजोग्रहे। प्रच्युतानां च गर्भाणां स्थापनं परमिष्यते। अश्विनोः संमतो योगो रक्तपित्तनिबर्हणः ॥ ६ ॥ इति चन्दनादिचूर्णम् ॥

## अथैलादिगुटिका।

एलापत्रत्वचोऽर्धाक्षा पिप्पल्यर्धपलं सिता। शिवामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ १ ॥ संचूर्ण्य मधुना युक्तां गुटिकां संप्रकल्पयेत्। अक्षमात्रां ततश्चैकां भक्षयेत्ता दिने दिने ॥२॥ कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्। रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ३ ॥ शोषं प्लीहोर्ध्ववातं च स्वरभेदं क्षतं क्षयम्। गुटिका तर्पणी वृष्या रक्तपित्तं विनाशयेत् ॥ ४ ॥ इत्येलादिगुटिका ॥

## अथ कूष्माण्डावलेहः।

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम्। पचेत्तप्ते घृतप्रस्थे पात्रे ताम्रमये दृढे ॥ १ ॥ यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्। पिप्पली शृङ्गवेरं च द्वे पले जीरकस्य च ॥२॥ त्वगेलापत्रमरिचधान्यकानां पलार्धकम्। न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेत्ततः ॥ ३ ॥ लेहीभूते सुशीते च दद्यात्क्षौद्रं घृतार्धकम्। क्षौद्रार्धकां सितां केचिद्द्राक्षां केचित्सितार्धकाम् ॥ ४ ॥ द्राक्षार्धानि लवङ्गानि कर्षकं पूरकं क्षिपेत्। तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी ॥ ५ ॥ कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः। वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम् ॥ ६ ॥ उरस्संधानकरणं बृंहणं स्वरबोधनम्। अश्विभ्यां निर्मितं श्रेष्ठं कूष्माण्डकरसायनम् ॥ ७ ॥ इति कूष्माण्डावलेहः ॥

## अथ खंडकूष्मांडकः।

खण्डकामलकाद्राक्षो रसः प्रस्थद्वयोन्मितः। खण्डकूष्माण्डके कंसः स्विन्नकूष्माण्डकद्रवात् ॥ १ ॥ अन्यत्र खण्डकूष्माण्डात्संमतः सकलो रसः। पञ्चाशच्च पलं स्विन्नकूष्माण्डात्प्रस्थमाज्यतः ॥ २ ॥ पक्वं पलशतं खण्डं वासाक्वाथाढके पचेत्। शिवा धात्री घनं भार्ङ्गी त्रिसुगन्धैश्च कार्षिकैः ॥ ३ ॥ तालीसविश्वधा-

१ खंडकूष्मांडके लेहे आमलकरसः प्रस्थद्वयं कूष्मांडरसः कंसः (प्रस्थचतुष्टयं) एतत्प्रस्थद्वयं खंडकूष्मांडादन्यत्र स्वाप्यं अनंतरं प्रस्थमिते आज्ये खंडकूष्मांडं पंचाशत्पलमितं भर्जयित्वा च पाको विधेय इत्यन्वयः।

न्याकमरीचैश्च पलांशकैः । पिप्पलीकुडवं चैव मधुना सह दापयेत् ॥ ४ ॥ कासं श्वासं ज्वरं हिक्कां रक्तपित्तं हलीमकम् । हृद्रोगमम्लपित्तं च पीनसं च व्यपोहति ॥ ५ ॥ इति खण्डकूष्माण्डः ॥

## अथ वासाखण्डः ।

तुलामादाय वासायाः पचेदष्टगुणे जले । तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १ ॥ चूर्णानामभयानां च खण्डं शतपलं तथा । शीतीभूते निदध्यात्तु क्षौद्रस्याष्टौ पलानि च ॥ २ ॥ वंशोद्भवायाश्चत्वारि पिप्पली द्विपलं तथा । चातुर्जातपलं चैकं चूर्णितं तत्र दापयेत् ॥ ३ ॥ रक्तपित्तं निहन्त्याशु कासं श्वासं तथा क्षयम् । विद्रधिं जठरं गुल्मं तृष्णाहृद्रोगपीनसान् ॥ पलार्धं भक्षणं चास्य पथ्येष्टं तत्र भोजनम् ॥ ४ ॥

## अथ खण्डकाद्यवलेहः ।

शतावरी छिन्नरुहा विडङ्गं कायस्थामृताफलत्रयं च । मुस्तं पुष्करमूलभार्ङ्गी । वृषो बृहत्यौ खदिरस्य मूलं पृथक्पृथक्पञ्च पलानि चात्र ॥ १ ॥ पक्त्वं जलद्रोणमितेऽष्टमांशं यावज्जयेत्क्षेपमथैव पूतम् । विमूर्च्छितस्यापि निधाय धीमान्पलानि च द्वादश माक्षिकस्य ॥ २ ॥ पलं सुवर्णस्य च लोहजस्य त्रिपाद्भितं खण्डघृतं च तुल्यम् । देयं पलं षोडशकं विधिज्ञो विपाचयेल्लोहमये कटाहे ॥ ३ ॥ गुडेन तुल्यं च यदा भवेत्तदा तुगा विडङ्गं मगधा च शुण्ठी । द्वे जीरके कर्कटकं फलत्रिकं धान्यं मरीचं सकणा सकेसरम् ॥ ४ ॥ पलप्रमाणं विदधीत तत्पृथक्सुघट्टितं चूर्णमिदं घृतेन । स्निग्धे कटाहे प्रणिधाय कुर्यात्कर्षप्रमाणं विहितावलेहम् ॥ ५ ॥ प्रभातकाले त्वनुदुग्धपानं गुरूणि चान्यानि च भोजनानि । रक्तं सपित्तं सहसा निहन्ति रक्तप्रवाहं च सरक्तशूलम् ॥ ६ ॥ रक्तातिसारं रुधिरप्रमेहं तथैव पक्तौ विहितं नराणाम् । भगंदरार्शः श्वयथुं निहन्ति तथाऽम्लपित्तं किल राजरोगम् ॥ ७ ॥ विशेषतः कुष्ठरुजश्च गुल्मान्बलप्रदं वृष्यतमं प्रदिष्टम् ॥ ८ ॥ इति खण्डकाद्यवलेहः ॥

## अथ रसाः ।

रक्तपित्तकुलकुठारः—शुद्धपारदबलिप्रवालकं हेममाक्षिकभुजंगरङ्गकम् । मारितं सकलमेतदुत्तमं भावयेत्पृथक्पृथग्द्रवैर्भिषक् ॥ १ ॥ चन्दनस्य कमलस्य मालतीकोरकस्य वृषपल्लवस्य च । धान्यवारणकणाशतावरीशाल्मलीवटजटामृतस्य च ॥ २ ॥ रक्तपित्तकुलकण्डनाभिधो जायते रसवरोऽस्रपित्तिनाम् । प्राणदो मधुवृषद्रवैरयं सेवितस्तु वसुकृष्णलैर्मितः । नास्त्यनेन सममत्र भूतले भेषजं किमपि रक्तपित्तिनाम् ॥ ३ ॥ इति रक्तपित्तकुलकुठारो रसः ॥

## अथ वासासूतः ।

आटरूपनवपल्लवद्रवे पालिके सरसभस्मवल्लकम् । कर्षसंमितमधुप्रयोजितं प्राश्य नाशयति रक्तपित्तकम् ॥ १ ॥ इति वासासूतः ॥

## अथ बोलपर्पटीरसः ।

सूतगन्धकसुकज्जलिकायाः पर्पटी समयुता समभागम् । बोलचूर्णविहितं प्रतिवाप्यं स्याद्रसोऽयमसृगामयहारी ॥ १ ॥ पञ्चगुञ्जमयुगुलं प्रतिदेयं शर्करामधुयुतः किल दत्तः । रक्तपित्तगुदजस्रुतियोनिस्रावमाशु विनिवारयतीरः ॥ २ ॥

इति बोलपर्पटीरसः ।

## अथ सुधानिधिरसः ।

गन्धं सूतं माक्षिकं लोहचूर्णं सर्वं घृष्टं त्रैफलेनोदकेन । लौहे पात्रे गोपयस्थं च कृत्वा रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै ॥ १ ॥ इति सुधानिधिरसः । यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् । रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् ॥२॥ इति रक्तपित्तचिकित्सा ।

## अथ राजक्ष्मनिदानम् ।

अनेकरोगानुगतो बहुरोगपुरोगमः । राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥ १ ॥ नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा । यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ २ ॥ राज्ञश्चन्द्रमसो यस्मादभूदेष किलाऽऽमयः । तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः ॥ ३ ॥ देहौषधक्षयकृतेः क्षयस्तत्संभवाच्च सः । रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ४ ॥

## अथ तत्र कारणचतुष्टयमाह—

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥ १ ॥ वातदोषा रसस्थानं नाऽऽप्नुवन्ति विशेषतः ॥ २ ॥ न भजेच्च ज्वरस्तावद्दोषे प्राप्ते भवर्तते । कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ॥ ३ ॥ अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तराः । क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ ४ ॥

## पूर्वरूपमाह—

श्वासाङ्गसादकफसंस्रवतालुशोषवम्यग्निसादमदपीनसकासनिद्राः । शोषे भविष्यति भवन्ति स चापि जन्तुः शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ १ ॥ स्वप्नेषु काकशुकशल्लकिनीलकण्ठगृध्रास्तथैव कपयः कृकलासकाश्च । तं वाहयन्ति स नदीर्विजलाश्च पश्येच्छुष्कांस्तरूनपवनधूमदवार्दितांश्च ॥ २ ॥ त्रिरूपं दर्शयन्नाह—अंसपार्श्वाभितापश्च संतापः करपादयोः । ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ १ ॥ अग्निमान्द्यं ज्वरः शैत्यं वान्तिः शोणितपूययोः । स्वरहानिश्च दौर्बल्यं रोगराजस्य लक्षणम् ॥ २ ॥ एकादश रूपाण्याह—स्वरभेदोऽनिलाच्छूलं संकोचश्चांसपार्श्वयोः ॥ ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चाऽऽगमः ॥ ३ ॥ शिरसः परिपूर्णत्वमभक्तच्छन्द एव च । कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ ४ ॥ तस्य षड्रूपाण्याह—भक्तद्वेषो ज्वरः कासः श्वासः शोणितदर्शनम् । स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥ ५ ॥ साध्या-

साध्यत्वमाह—एकादशभिरेतैर्वा षड्भिर्वाऽपि समन्वितम्। कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः॥ ६॥ त्रिभिर्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः। जह्याच्छोषार्दितं जन्तुमिच्छन्सुविपुलं यशः॥ ७॥ सर्वैरर्धैस्त्रिभिर्वाऽपि लिङ्गैर्मांसबलक्षये। युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा॥ ८॥ महाशनं क्षीयमाणमतीसारनिपीडितम्। शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत्॥ ९॥ उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नवम्। शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम्॥ १०॥ कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम्। अन्यक्षयानाह—व्यवायशोकवार्धक्यव्यायामाध्वप्रशोषितान्॥ ११॥ व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु। व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः॥ १२॥ पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः। प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः॥ १३॥ चिन्ताशुक्रक्षयकृतैर्विकारैरुपलक्षितः॥ १४॥ जराशोषिलक्षणमाह—जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः। कम्पनोऽरुचिमान्भिन्नकांस्यपात्रहतस्वनः॥ १५॥ ष्ठीवति श्लेष्मणा हीनं गौरवारतिपीडितः। संप्रस्रुताक्षिनासास्यः शुष्करूक्षमलच्छविः॥ १६॥ अध्वशोषिणमाह—अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः। प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः॥ १७॥ व्यायामशोषिलक्षणमाह—व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः। लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतादृते॥ १८॥ व्रणशोषिणमाह—रक्तक्षयाद्वेदनाभिस्तथैवाऽऽहारयन्त्रणात्। व्रणितश्च भवेच्छोषः स चासाध्यतमो मतः॥ १९॥ परं दिनसहस्रं तु यदि जीवति मानवः। सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः॥ २०॥ मलायत्तं बलं पुंसां शुक्रायत्तं तु जीवितम्। तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी॥ २१॥ इति राजयक्ष्मनिदानम्।

## अथातो राजयक्ष्मचिकित्सां व्याख्यास्यामः।

किंचिल्लिङ्गयुतं दीप्तपावकं त्वकृशं नरम्। उपाचरेदात्मवन्तं यक्ष्मिणं साध्यलक्षणम्॥ १॥ अर्धलिङ्गैः कृच्छ्रसाध्यं सर्वलिङ्गैः परित्यजेत्। यक्ष्मिणं शुक्लनयनं तथा भक्तद्विषं कृशम्॥ २॥ तथोर्ध्वश्वासिनं कृच्छ्रं मेहन्तं परिवर्जयेत्। अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः॥ ३॥ व्यवायशोषिणं क्षीररसमांसाज्यभोजनैः। सुकुलैर्मधुरैर्गन्धैर्जीवनीयैरुपाचरेत्॥ ४॥ व्रणशोषं जयेत्स्निग्धैर्दीपनैः स्वादुशीतलैः। दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत्॥ ५॥ हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः। आस्यासुखैर्दिवास्वप्नदीपनैर्मधुरबृंहणैः॥ ६॥ तत्र मांसरसाहारैरध्वशोषिणमाच-

---

१ शुक्रस्य क्षयलक्षणमाह—शुक्रक्षये रुजोऽशक्तिर्व्यथा शेफसि मुष्कयोः॥ चिरेण शुक्रसेकः स्यात्सेके रक्ताल्पशुक्रता। २ क्षीणशुक्रस्य पुरुषस्य लक्षणमाह—दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः। क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम्। ३ कस्तूरिकायामामोदः कर्पूरे मुखवासनः। बकुले स्यात् परिमलः सुरभिर्धूपके स्मृतः।

देव् । ईषदम्लैरनम्लैर्वा यूषमांसरसादिभिः ॥ ७ ॥ व्यायामशोषिणं स्निग्धैः क्षतक्षयहितैर्हिमैः । उपचारैर्जीवनीयैर्विधिना क्षैमिकेण तु ॥ ८ ॥ बलिनो बहुदोषस्य वमनं रेचनं तथा । वातश्लेष्महरं कार्यं दद्याद्दोषापहं पुरा ॥ ९ ॥ यक्ष्मिणः क्षीणदेहस्य परकृतं स्याद्विषोपमम् । वृन्ताकं कारवेल्लं च तैलं विल्वं च राजिकाम् ॥ १० ॥ मैथुनं च दिवा निद्रां क्षयी कोपं च वर्जयेत् । शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ॥ ११ ॥ मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यतः । मूलकानां कुलत्थानां यूषैर्वा सूपसंस्कृतैः ॥ १२ ॥ सपिप्पलीकं सयवं सकुलत्थं सनागरम् । दाडिमामलकोपेतं स्निग्धमाजरसं पिबेत् ॥ १३ ॥ तेन षड् विनिवर्तन्ते विकाराः पीनसादयः । सधान्ययवगोधूममुद्गाश्चापि सदा हिताः ॥ १४ ॥ स्निग्धचतुष्पदे श्रेष्ठाः पुमांसो विहगा मताः । हरिणच्छागमांसं तु श्लक्ष्णचूर्णीकृतं शुभम् ॥ १५ ॥ अजाक्षीरेण पातव्यं क्षयव्याधिनिवारणम् । छागमांसं पयश्छागं सर्पिश्छागं सशर्करम् । छागोपसेवा सततं छागमध्ये तु यक्ष्मनुत् ॥ १६ ॥ ]

## अथ षडङ्गयूषः ।

मुष्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् । पादस्थं संस्कृतं चाऽऽज्ये षडङ्गो यूष उच्यते ॥ १ ॥ इति षडङ्गयूषः । धान्यकं पिप्पलीविश्वदशमूलीजलं पिबेत् । पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ १ ॥ दशमूलबलारास्नापुष्करामरदारुनागरैः क्वथितम् । पेयं पार्श्वांसशिरोरुक्क्षतकासादिशान्तये सलिलम् ॥ २ ॥ इति दशमूलादिः । ककुभत्वङ्नागबला वातारिबीजं च चूर्णितं पयसा । पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ १ ॥ अश्वगन्धामृताभीरुदशमूली बलावृषम् । पुष्करातिबला घ्नन्ति क्षयं क्षीररसाशिनः ॥ २ ॥

## अथ तालीसाद्यं चूर्णम् ।

तालीसपत्रं मरिचं नागरं पिप्पली तुगा । यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥ १ ॥ पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा । कासश्वासारुचिहरं सचूर्णं दीपनं परम् । पाण्डुहृद्ग्रहणीदोषप्लीहशोषज्वरापहम् ॥ २ ॥

अथ सितोपलाद्यं चूर्णम् । सितोपला षोडश स्यादष्टौ स्याद्वंशरोचना । पिप्पली स्याच्चतुष्कर्षा एला स्याच्च द्विकार्षिका ॥ १ ॥ एककर्षस्त्वचः कार्यश्चूर्णयेत्सर्वमेकतः । सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत् ॥ २ ॥ कासश्वासक्षयहरं हस्तपादाङ्गदाहजित् । मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम् । ज्वरमूर्ध्वगतं रक्तपित्तमाशु व्यपोहति ॥ ३ ॥

अथ लवङ्गादिचूर्णम् । लवङ्गकक्कोलमुशीरचंदनं नतं सनीलोत्पलकृष्णजीरकम् । एला सकृष्णागरुभृङ्गकेसरं कणा सविश्वा नलदं सहाम्बुना ॥ १ ॥ कर्पूरजातीफलवंशरोचनं सिताधभागं समसूक्ष्मचूर्णितम् । संरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषनुत् ॥ २ ॥ उरोविबन्धं तमकं गलग्रहं सकासहिक्कारुचियक्ष्मपीनसम् । ग्रहण्यतीसारमथास्रजः क्षयं प्रमेहगुल्मांश्च निहन्ति सत्वरम् ॥ ३ ॥

अथ कर्पूराद्यं चूर्णम् । कर्पूरचोचकङ्कोलजातीफलदलैः समाः । लवङ्गनागकेशरमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥ १ ॥ चूर्णं सितासमं ग्राह्यं सदाहश्वासकासजित् । पलयक्ष्मतमकासच्छर्दिकण्ठामयापहम् । प्रयुक्तं पानपानैर्वा भेषजैर्विनी
हितम् ॥ २ ॥ इति हृदयदाहे कर्पूराद्यं चूर्णम् ।

## अवैलादिचूर्णम् ।

एला पत्रं नागपुष्पं त्वचश्च भागवर्धितं द्वौ च सर्पूरकस । द्राक्षापटीशर्करा-
पिप्पलीनां चत्वारस्त्वशीतसुर्ण क्षये स्यात् ॥ १ ॥

## अथाश्वगन्धादिचूर्णम् ।

अश्वगन्धादशपलं तदर्धं भागराग्निमम् । तदर्धकमयार्श्चसुण्ठं मरीचं च तदर्ध-
कम् ॥ १ ॥ चातुर्जातं मेराकं च मोगीं तालीसपत्रकम् । कपोराजात्रिकैर्दपर्णमोसी-
कङ्कोलसुलकम् ॥ २ ॥ रास्ना कटुकरोहिण्या जीवन्ती गुडकं तथा । पृथक् कर्ष-
मितं चूर्णं चूर्णेन समशर्करा ॥ ३ ॥ प्रातःकाले पिबेदं चूर्णं अतेनोष्णेन सेवयेत् ।
धातुक्षये पित्तशोषे रसमागोघृतसंयुतम् ॥ ४ ॥ श्लेष्मक्षये क्षौद्रयुतं नवनीतेन
मेहजित् । शिरोभ्रमे च पित्तार्ते गोक्षीरेण समायुतम् ॥ ५ ॥ क्षतक्षीणे च देहे
च विशेषबलवर्धनम् । मेदोहरं च मन्दाग्निकुक्षिशूलोदरापहम् । अनुपानविशेषेण
सर्वरोगहरं परम् ॥ ६ ॥

## अथ द्राक्षादिचूर्णम् ।

द्राक्षाखर्जूरसितोत्पलं समधुकं खर्जूरगोपीयुगाह्वीबेरामलकाब्दचन्दनमनः
कङ्कोलजातीफलम् । धातुनीताकणा सधान्यकमिदं चूर्णं समा शर्करा मानभेक्षि-
रामाम्भकेन विधिना पित्तं सदाहं जयेत् ॥ १ ॥ मूर्छा छर्दिमरोचकं च शमये-
त्कायस्य कान्तिप्रदं पाण्डुं कामलरक्तपित्तमुदरं दाहज्वरारोचकम् । यक्ष्माणं
रुधिरप्रमेहहरणं सप्तोत्रिदोषापहं रक्ताशोंसदवृद्धिविद्रधिहरं द्राक्षादिचूर्णोत्तमम्
॥ २ ॥ यवगोधूमचूर्णं वा क्षीरमिदं घृतप्लुतम् । सनुम्या सर्पिषा क्षौद्रसिता-
म्लक्षयशान्तये ॥ ३ ॥

## अथ चतुर्दशाङ्गलोहम् ।

राजाकर्पूरतालीसं भेकपर्णी शिलाजतु । त्रिकटु त्रिफला मुस्ता विडङ्गदहना-
समाः ॥ १ ॥ चतुर्दशायसो भागाश्चूर्णं मधुसर्पिषा । लीढं कासं ज्वरं श्वासं
राजयक्ष्माणमेव च । बलवर्णाग्निपुष्टीनां वर्धनं दोषनाशनम् ॥ २ ॥

## अथ बृहल्लवायसम् ।

त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः । नवभागोन्मितैरेतैः समं तीक्ष्णं मूर्त-
मभवेत् ॥ १ ॥ संचूर्ण्याऽऽलोडयेत्क्षौद्रे नित्यं यः सेवते नरः । कासं श्वासं क्षयं
मेहं पाण्डुरोगं भगंदरम् । ज्वरं मन्दानलं शोथं संमोहं ग्रहणीं जयेत् ॥ २ ॥

## अथ शिलाजतुयोगः ।

फलत्रिककषायविशुद्धमादौ तीक्ष्णं गुहूच्या दशमूलसिद्धम् । स्थिरादिकाकोलि-

---

१ लवङ्गम् ।

गुणादिसिद्धं शिलाजतु स्यात्क्षमिषु प्रशस्तम् ॥ १ ॥ द्राक्षाखर्जूरसर्पिर्भिः पिप्पल्या च सह स्मृतम् । सक्षौद्रं ज्वरकासघ्नं स्वयं चैतत्प्रयोजयेत् ॥ २ ॥ मधुताप्यविडङ्गाश्मजतुलोहघृताभयम् । हन्ति यक्ष्माणमत्युग्रं सेव्यमानं हिताशिना ॥ ३ ॥ शिलाजतुमधुव्योषताप्यलोहरजांसि च । क्षीरभुग्लेहिनश्चाऽऽशु क्षयः क्षयमवाप्नुयात् ॥ ४ ॥ कृष्णाद्राक्षासितालेहः क्षये वा क्षौद्रतैलपान् । मधुसर्पिर्युतो वाऽश्वगन्धाकृष्णासितोद्भवः ॥ ५ ॥ कूष्माण्डकगिरोत्थेन रसेन परिपेषितम् । लाक्षाकर्षद्वयं पीत्वा जयेद्रक्तक्षयं तथा ॥ ६ ॥ शतपुष्पा समधुकं कुष्ठं तगरचन्दनम् । आलेपनं स्यात्सघृतं शिरःपार्श्वांसशूलनुत् ॥ ७ ॥ अश्वत्थवल्कलं चैव त्रिकटु लोहकिट्टकम् । गुडेन सह दातव्यं क्षयरोगविनाशनम् ॥ ८ ॥

अथ चिकित्साकलिकातश्च्यवनप्राश्यावलेहः—द्विपञ्चमूलीजलसिद्धमाज्यं धात्रीघृतं चाऽप्यथ षट्पलं च । पेयं हि तद्भागलगव्यतोऽथ प्रयुज्यते नागबलाभिधानम् ॥ १ ॥ द्राक्षीतामलकीफलत्रिकबलाच्छिन्नाविदारीशटीजीवन्तीदशमूलचन्दनघनैर्नीलोत्पलैलावृषैः । मृद्वीकाष्टवर्गपौष्करयुतैः सार्धं पृथक्पालिकैरष्टोनानि शतानि पञ्च विपचेद्धात्रीफलानामपः ॥ २ ॥ उद्धृत्याऽऽमलकानि तैलघृतयोः षड्भिश्च षड्भिः पलैर्भृष्टान्यर्धतुलां निधाय विधिवन्मत्स्यण्डिकायाः पचेत् । शीते षण्मधुनः पलानि कुडवो चाश्याश्चतुर्जाततो भुक्तिमांगधिकापलद्वयमयं प्राश्यः स्मृतश्च्यावनः ॥ ३ ॥ न शोषः साफल्यं भजति वपुषि क्षीणमनसो न मूर्छा नो छर्दिस्तदपि च न च श्वासकसनम् । न चालक्ष्मीर्विघ्नः क्वचिदपि च न व्यापदभयं प्रयोगादेतस्मान्मनसिजधियो बिभ्रति मनः ॥ ४ ॥ इति च्यवनप्राशः ।

अथ खण्डपिप्पल्यवलेहः—कृष्णाप्रस्थं पंचेचाऽऽढकपयसि घृतस्याञ्जलिं खण्डपात्रं दत्त्वा लेहोऽयमस्मिन्सुरकुसुमचतुर्जातविश्वोषणादीन् । ग्रन्थिश्रीखण्डपटीमधुमसृणजलं जातिकोशं च कर्षं प्रत्येकं चूर्णयित्वा मधुकुडवयुतः स्याच्च कृष्णावलेहः ॥ १ ॥ आदौ मन्दाग्निकार्श्यं हरति स च शिशुस्त्रीजरन्मानुषेषु प्रायो वृष्यः क्षयाये विपुलबलकरो दीपनः पाचनश्च । कासश्वासौ च मेहक्षयरुगतितृषाकामलापाण्डुकण्ठप्लीहाजीर्णज्वरांश्चानिलकफविकृतिं रक्तपित्तं च हन्यात् ॥ २ ॥

अथ वासावलेहः—तुलामादाय वासायाः पचेदष्टगुणे जले । तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १ ॥ चूर्णानामभयानां [illegible] खण्डात्पलशतं तथा । द्वे पले पिप्पलीचूर्णात्सिद्धे शीते च माक्षिकात् ॥ २ ॥ कुडवं पलमानं [illegible] चातुर्जातं सुचूर्णितम् । क्षिप्त्वाऽवलोडितं खादेद्रक्तपित्तक्षतक्षयी । कासश्वासगृहीतश्च यक्ष्मणा च विशेषतः ॥ ३ ॥ इति वासावलेहः ।

शार्ङ्गधरादगस्त्यवलेहः—हरीतकीशतं भद्रं यवानामाढकं तथा । पलानां दशमूलस्य विंशतिं च नियोजयेत् ॥ १ ॥ चित्रकः पिप्पलीमूलमपामार्गः शटी तथा । कपिकच्छुः शङ्खपुष्पी भार्गी च गजपिप्पली ॥ २ ॥ पुष्करमूलं च पृथग्द्विपलमात्रया । पञ्चाढके जले पचेत् शिवैः

॥ ३ ॥ तथामयाशतं दद्यात्काये तस्मिन्विचक्षणः । सर्पिस्तैलाष्टपलिकं क्षिपेद्गुड-तुलां तथा ॥ ४ ॥ पक्त्वा लेहत्वमानीय सिद्धशीते पृथक्पृथक् । क्षौद्रं च पिप्प-लीचूर्णं दद्यात्कुडवमात्रया ॥ ५ ॥ हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः । क्षयं कासं ज्वरं श्वासं हिक्काशोंऽरुचिपीनसान् ॥ ६ ॥ ग्रहणीं नाशयत्येष ,वलीपलित-नाशनः । बलवर्णकरः पुंसामवलेहो रसायनम् ॥ ७ ॥ विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशनः । शर्करामधुसंयुक्तं नवनीतं लिहन्क्षयी । क्षीराशी लभते पुष्टि-मतुल्ये चाऽऽज्यमाक्षिके ॥ ८ ॥

## अथ शिवगुटिका ।

ग्रीष्मारान्प्रथमं शिलाजतु जले भाव्यं भवेत्त्रिफले निःक्वाथे दशमूलजेऽथ तदनु च्छिन्नोद्भवाया रसे । वाट्यालक्वथने पटोलसलिले यष्टीकषाये पुनर्गोमूत्रेऽथ पय-स्यथापि च गवामेषां कषाये ततः ॥ १ ॥ द्राक्षाभीरुविदारिकाद्वयपृथक्पर्णीस्थि-रापिप्पलैः पाठाकौटजकर्कटाख्यकटुकारास्नाम्बुदाब्दघुषैः । दन्तीचित्रकचव्यवार-णकणावीराष्टवर्गौषधैरष्टद्रोणे चरणस्थिते पलमितैरेभिः पृथग्भावयेत् ॥ २ ॥ धात्रीमेषविषाणिकात्रिकटुकैरेभिः पृथक्पञ्चकैर्द्व्यंशैश्च द्विपलोन्मितैरपि पलं चूर्णं विदारीभवम् । तालीसात्कुडवं चतुष्पलमिह प्रक्षिप्यते सर्पिषस्तैलस्य द्विपलं पलाष्टकमथ क्षौद्राद्विपक्वं योजयेत् ॥ ३ ॥ तुल्यं पलैः षोडशभिः सितायास्त्व-क्क्षीरिकापत्रककेसरैश्च । विश्वांशकैस्त्वक्त्रुटिसंप्रयुक्तैरिल्लक्षमात्रा गुटिकाः प्रक-ल्प्याः ॥ ४ ॥ तासामेकतमां प्रयोज्य विधिवत्प्रातः पुमान्भोजनमात्रावा मुद्गद-लाम्बुमाङ्गलरसं शीतं शृतं वा जलम् । माक्षीकं मदिरामगुर्वशनभुक्पीत्वा पयो या गवां प्राप्नोत्यङ्गमनङ्गवत्सुभगतां संपन्नमानन्दकृत् ॥ ५ ॥ शोफग्रन्थिविमन्थ-मेषघुवमीपाण्डुामयश्लीपदप्लीहार्शःप्रदरप्रमेहपिडिकामेहाश्मरीशर्कराः । हृद्रोगा-र्बुदवृद्धिविद्रधियकृद्योन्यामयाः सानिला ऊरुस्तम्भभगंदरं ज्वरजसत्स्तनी प्रवृनी तृषा ॥ ६ ॥ वातासृक्प्रबलं प्रवृद्धमुदरं कुष्ठं किलासं कृमीन्कासश्वासमुरःक्षत-क्षयमसृग्विपित्तं सपानात्ययम् । उन्मादं मदमप्यपस्मृतिमतिस्थौल्यं कृशत्वं तनोः खालित्यं च हलीमकं च शमयेन्मूत्रस्य कृच्छ्राणि च ॥ ७ ॥ भवति जरया सर्व-श्वेतैरकालजराकृतैर्धृतमलिकुलाकारैरेभिः शिरश्च शिरोरुहैः । प्रसरति बलं चक्षुः-स्वङ्गं वपुश्च समुद्वहन्प्रभवति शतं स्त्रीणां गन्तुं जनो जनवल्लभः ॥ ८ ॥ स्तिमि-तमतिरप्यज्ञानान्धः सदस्यपटुः पुमान्सकृदपि यया ज्ञानोपेतः श्रुतिस्मृतिमान्भ-वेत् । भजति च यया युक्तो योगी शिवस्य समीपतां शिवगुटिकया कस्तामेतां करोति न मानुषः ॥ ९ ॥ इति शिवगुटिका ।

## अथ लघुशिवगुटिका ।

कौटजत्रिफलानिम्बपटोलघननागरैः । भावितानि दशाहानि रसैर्द्वित्रिगुणानि च ॥ १ ॥ शिलाजतुपलान्यष्टौ तावती सितशर्करा । त्वक्क्षीरीपिप्पलीधात्रीक-र्कटाख्यान्पलोन्मितान् ॥ २ ॥ निदिग्धिफलमूलाभ्यां पलं युञ्ज्यात्त्रिजातकात् । मधुत्रिफलसंयुक्तान्कुर्यादक्षसमान्गुडान् ॥३॥ दाडिमाम्लपयःक्षीररसयूषसुरास-

धान् । तं भक्षयित्वाऽनुपिबेत्क्षिरजो हितमद्यमुष्ट ॥ ४ ॥ पाण्डुकुष्ठज्वरप्लीह-तमकार्शोभगंदरम् । नाशयेन्मूत्रकृच्छ्राणि मूत्रस्याणविधग्धनात् ॥ ५ ॥ यत्राज योजितं येन कान्तलोहं तथाऽभ्रकम् । पलं पलं च मिलिते तदा स्यात्क्रमतः परम् ॥ ६ ॥ तीव्रदुःखप्रदं पाण्डुं प्रमेहं सपरिग्रहम् । राजरोगं च व्याधींश्च जयेदिति किमद्भुतम् ॥ ७ ॥ इति लघुशिवगुटिका ।

## अथ सूर्यप्रभागुटिका ।

दार्वी व्योषविडङ्गचित्रकवचापीताकरञ्जामृतादेवाह्वानिविषा त्रिवृत्सकटुका कुस्तुम्बरुः कारवी । द्वौ क्षारौ लवणत्रयं गजकणा चव्यं तथा पुष्करं तालीसं कणमूलपुष्करजटाभूनिम्बसंज्ञैर्युतम् ॥ १ ॥ भार्गी पद्मकजीरकोशकुटजो दन्ती घना भद्रकं सर्वं कर्षसमांशकं सुभिषजा सूक्ष्मं च संचूर्णितम् । तद्वत्पञ्चपलं वरं गिरिजतु स्यात्पञ्चमुष्टिः पुरो लोहस्य द्विपलं पलद्वयमथो ताप्यस्य संमिश्रितम् ॥ २ ॥ क्षिप्त्वा यत्र पलानि शुभ्रसिकता पांशीपलं योजितमेकैकं त्रिसुगन्धि वस्तु पलिकं क्षौद्रैर्घृतैर्लेहवत् । एकीकृत्य समांशमेव गुटिका कार्या सुवर्णोन्मिता सा च प्रक्षमुखाम्बुजप्रकटिता सूर्यप्रभा नामतः ॥ ३ ॥ शोषं कासमुरःक्षतं सतमकं पाण्ड्वामयं कामलां गुल्मं विद्रधिपार्श्वशूलमुदरं स्त्रीषु क्षयं च क्रिमीन् । कुष्ठार्शोविषमज्वरग्रहणिकामूत्रग्रहं नाशयेत्सुकरैका गुटिका प्रहृष्टमनसा योज्यं यथेष्टाशनम् ॥ ४ ॥ नास्त्येतत्समभौषधं त्रिजगतीचक्रे हितं प्राणिनां प्रोद्दामप्रमदामदद्विपदराद्दसिंही तु सूर्यप्रभा ॥ ५ ॥ इति सूर्यप्रभागुटिका ।

## अथ घृतानि ।

अथ बलाद्यं घृतम् । बला श्वदंष्ट्रा बृहती कलशी धावनी स्थिरा । निम्बः पर्पटकं मुस्तं त्रायमाणं दुरालभा ॥ १ ॥ कृत्वा कषायं पेष्यार्थं दद्यात्तामलकीं शटीम् । द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ २ ॥ घृतं पचेच्च तत्सिद्धं सर्पिर्ज्वरहरं परम् । क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥ ३ ॥ इति बलाद्यं घृतम् । अथ कोलाद्यं घृतम्—कोललाक्षारसे तद्वत्क्षीराष्टगुणसाधितम् ॥ कल्कैर्विडङ्गदार्वीत्वग्द्राक्षाक्षोटफलान्वितैः ॥ १ ॥ घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः । सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ २ ॥ इति कोलाद्यं घृतम् । अथ गोक्षुराद्यं घृतम्—श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीर्बलाम् । भागान्पलोन्मितान्कृत्वा पलं पर्पटकस्य च ॥ १ ॥ पचेद्दशगुणे तोये दशभागावशेषिते । रसे पूते तु द्रव्याणामेषां कल्कान्समावपेत् ॥ २ ॥ शटीपुष्करमूलानां पिप्पलीत्रायमाणयोः । आमलक्याः किराततानां तिक्तस्य कटुकस्य च ॥ ३ ॥ फलानां सारिवायाश्च सुपिष्टा कर्षसंमितान् । तैः साधयेद् घृतप्रस्थं क्षीरं द्विगुणितं भिषक् ॥ ४ ॥ ज्वरं दाहं भ्रमः श्वासं कासं पार्श्वशिरोरुजम् । तृष्णां छर्दिमतीसारमेतत्सर्पिर्व्यपोहति ॥ ५ ॥ इति गोक्षुराद्यं घृतम् ॥ अथ जीवन्त्यादिघृतम्—जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च । शटीपुष्करमूलं च व्याघ्रीं गोक्षुरकं बलाम् ॥१॥ नीलोत्पलं चाऽऽमलकीं त्रायमाणां-

पिप्पली च समा पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥२॥ घृतमग्निसमूहस्य रोगराजस्य दुर्जयम् । रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ३ ॥ इति जीवन्त्यादिघृतम् । इति घृतानि ।

## अथ तैलानि ।

अथ चन्दनादितैलम्—चन्दनाम्बुनखं वाप्यं यष्टी शैलेयपद्मकम् । मञ्जिष्ठा सरलं दारु शट्येला जातिकेसरम् ॥ १ ॥ पत्रं बिल्वमुशीरं च कङ्कोलं चन्दनाम्बुदम् । हरिद्रे सारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥ २ ॥ त्वग्रेणुनलिका चैभिस्तैलं मस्तुचतुर्गुणम् । लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥ ३ ॥ अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम् । आयुःपुष्टिकरं चैव वशीकरणमुत्तमम् । निःशेषक्षयरोगघ्नं रक्तपित्तहरं परम् ॥ ४ ॥ इति चन्दनादितैलम् । अथ लाक्षादितैलम्—तैलं प्रस्थमितं चतुर्गुणजतुक्वाथं चतुर्मस्तुकयष्टीदारुनिशाब्दमूर्वकटुकासिंह्यश्च कौन्तीहिमैः । रास्नाद्यैः पिचुसंमितैः कृतमिदं शस्तं तु जीर्णज्वरे सर्वस्मिन्विषमेऽपि यक्ष्मणि शिशौ वृद्धे सगर्भासु च ॥ १ ॥ इति लाक्षादितैलम् ।

## अथ चन्दनबलालाक्षादितैलम् ।

चन्दनं च बलामूलं लाक्षा लामज्जकं तथा । पृथक्पृथक्प्रस्थमितं जलद्रोणे विपाचयेत् ॥ १ ॥ चतुर्भागावशेषेऽस्मिंस्तैलं प्रस्थद्वयं क्षिपेत् । चन्दनोशीरमधुकशताह्वा कटुरोहिणी ॥ २ ॥ देवदारु निशा कुष्ठं मञ्जिष्ठागुरुवालकम् । अश्वगन्धा बला दार्वी मूर्वा मुस्ता समूलिका ॥ ३ ॥ एला त्वङ्नागकुसुमं रास्ना लाक्षा सुगन्धिका । चम्पकं पीतसारं च सारिवा चोरकद्रुमम् ॥ ४ ॥ कल्कैरेतैः समायुक्तं क्षीराढकसमन्वितम् । तैलमभ्यञ्जने श्रेष्ठं सप्तधातुविवर्धनम् ॥ ५ ॥ कासश्वासक्षयहरं सर्वच्छर्दिनिवारणम् । असृग्दरं रक्तपित्तं हन्ति पित्तकफामयम् ॥ ६ ॥ कान्तिकृद्दाहशमनं कण्डूविस्फोटनाशनम् । शिरोरोगं नेत्रदाहमङ्गदाहं च नाशयेत् ॥ ७ ॥ धात्वामयहतानां च क्षीणानां क्षीणरेतसाम् । बालमध्यमवृद्धानां शस्यते शोफकामले । पाण्डुरोगे विशेषेण सर्वज्वरविनाशनम् ॥ ८ ॥

## अथाश्वगन्धादितैलम् ।

अश्वगन्धा बला लाक्षा प्रस्थं प्रस्थं पृथक्पृथक् । जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ॥ १ ॥ तैलं त्रिमानिकं दद्याद्दधिमस्तु चतुर्गुणम् । अश्वगन्धा निशा दारु कौन्ती कुष्ठाब्दचन्दनैः ॥ २ ॥ निशा तिक्ता शताह्वा च लाक्षा मूर्वा समूलका । सुरदारु च मञ्जिष्ठा मधुकोशीरसारिवाः ॥ ३ ॥ समभागानि सर्वाणि कल्कीकृत्य विपाचयेत् । सर्वज्वरं हरत्याशु शोफघ्नं लघु बृंहणम् ॥ ४ ॥ कासश्वासहरं चैव सर्वधातुविवर्धनम् । एतदभ्यञ्जनेनाशु क्षयरोगी विमुच्यति ॥ ५ ॥ इत्यश्वगन्धादितैलम् ।

---

१ वाल. २ पीतचंदन. ३ रेणुकबीज.

## अथ लक्ष्मीविलासतैलम् ।

एलाश्रीखण्डरास्नाजतुनखशशिनः कोलकं चाथ मुस्ता वालत्वग्दारुकृष्णागुरु-तगरजटाकुष्ठमेतत्समांशम् । त्रैगुण्यं कालशलं सुदृढमरुकायव्रतः सिद्धमेतत्-तैलं पुष्पैश्च भाव्यं परिमलमिलितं नामतो गन्धतैलम् ॥ १ ॥ एतल्लक्ष्मीविलासं प्रजयति जगतीनायकैः संप्रयुक्तं युक्त्या नाना च रोगान्निखिलगदहरं वातसंघा-तहन्तृ । पीतं ताम्बूलवल्लीदलयुतममलं जाठरं वह्निमिद्धं कुर्याद्दुर्नामदद्रुक्षयमपि नितरामङ्गसंमर्दनेन ॥ २ ॥ इति लक्ष्मीविलासतैलम् ।

## अथ द्राक्षासवः ।

मृद्वीकायास्तुलार्धं तु द्विद्रोणेऽपां विपाचयेत् । पादशेषे कषाये च पूतशीते प्रदापयेत् ॥ १ ॥ गुडस्य द्वितुलां मानीं धातक्या घृतभाजने । विडङ्गं फलिनी कृष्णा त्वगेला पत्रकेसरम् ॥ २ ॥ मरीचं च भिषक्चूर्णं सम्यग्दत्वा विचक्षणः । क्षिपेच्च पलिकैर्भागैः स्थापयेच्चैव तद्दिने ॥ ३ ॥ ततो यथाबलं पीत्वा कासश्वा-सगलामयान् । हन्ति वक्ष्यमाणमरुग्भ्रमुरःसंधानकारकम् ॥ ४ ॥ चतुर्थभागो द्राक्षाया धातकीमत्र केचन । प्रयच्छन्ति ततो वीर्यमेतस्योच्चैः प्रजायते ॥ ५ ॥ इति द्राक्षासवो वीरसिंहावलोकतः ।

## अथ पिप्पल्यरिष्टः ।

पिप्पलीलोध्रमरिचपाठाधान्येलवालुकैः । चव्यचित्रकजन्तुघ्नकुष्ठोशीरचन्दनैः ॥ १ ॥ मुस्ताप्रियङ्गुलवलीहरिद्राभिसिपल्लवैः । पत्रत्वक्कुष्ठतगरैर्नागकेसरसंयुतैः ॥ २ ॥ भागैः स्यादर्धपलिकैर्द्राक्षां षष्टिपलां क्षिपेत् । पलानि दश धातक्या गुडस्य च शतत्रयम् ॥ ३ ॥ तोयार्मणद्वये सिद्धं भवत्येतत्सुखावहम् । ग्रहणी-पाण्डुरोगार्शःकार्श्यगुल्मोदरापहः । पिप्पल्यादिररिष्टोऽयं क्षयक्षयकरः परम् ॥४॥ इति पिप्पल्यरिष्टः ।

## अथ खर्जूरासवः ।

पञ्चप्रस्थं समादाय खर्जूरस्य विचक्षणः । द्रोणाम्भसि पचेत्सम्यग्पादशेषे गालये-त्ततः ॥ १ ॥ कुंभीं सुधूपितां कृत्वा प्रक्षिपेत्तं रसं शुभम् । इपुषां ताम्रपुष्पीं च कषाये तत्र निक्षिपेत् ॥२॥ द्वारं निरुध्य सुदृढं निक्षिपेद्वसुधातले । सप्तकद्वयथो-गेन सिद्धोऽयं त्वासवो रसः ॥ ३ ॥ रोगराजं तथा शोफं प्रमेहं पाण्डुकामलाम् । ग्रहणीं पञ्च गुल्मार्शो नाशमत्यतिवेगतः ॥ ४ ॥ इति गदनिग्रहात्खर्जूरासवः ।

## अथ गुडूच्यादिमोदकः ।

गुडूचीं खण्डशः कृत्वा कुट्टयित्वा सुमर्दयेत् । यत्नेन विधृतं तोयं स्रावयेत्-च्छनैःशनैः ॥ १ ॥ शुद्धशङ्खनिभं चूर्णमेतः संमिश्रयेद्भिषक् । उशीरं वासकं पद्मं कुष्ठं धात्रीं च मौसलीम् ॥ २ ॥ एलां हरेणुकां द्राक्षां कुङ्कुमं ।

१ शायमांवल्ली.

पद्मकन्दं च कर्पूरं चन्दनद्वयमिश्रितम् ॥ ३ ॥ व्योषं च मधुकाजाजीश्च भयगन्धा शतावरीम् । गोक्षुरं मर्कटाख्यं च जातीकङ्कोलपौरकम् ॥ ४ ॥ रसाभ्रकलोहैश्च संमिश्रं कारयेद् बुधः । एतानि समभागानि द्विगुणा स्यात्तु शर्करा ॥ ५ ॥ मत्स्यण्ड्याज्यमधूपेतं भक्षयेत्प्रातरुत्थितः । क्षयं च रक्तपित्तं च पाददाहमसृग्दरम् ॥ ६ ॥ मूत्राघातं मूत्रकृच्छ्रं वातकुण्डलिकां तथा । निहन्याच्च प्रमेहांश्च सोमरोगं च दारुणम् ॥ ७ ॥ रसायनमिदं श्रेष्ठं वीर्याणामसृतं याऽमृतान्यसाम् ॥ ८ ॥ इति गुडूच्यादिमोदकः ।

## अथ रसाः ।

### अथ चतुर्मुखरसः ।

सूतायोभ्रकसारभागं समलवं सूतार्द्धमितुल्यं मृतं स्वर्णं सर्वमिदं निधाय विमले खल्वे दिनं मर्दयेत् । कन्याम्भोजपत्रापुनर्नवरसैः कण्डूलवह्नैः पुनर्भाव्यं चित्रकपर्ककैर्मतरं सेव्येष्टधान्यान्तरम् ॥ १ ॥ कुर्याद्ब्रह्मविनिर्मितं रसवरं यक्ष्मापहं पुष्टिदं बल्यं क्षौद्रफलत्रयेण सहितं मेदाग्निमान्द्यमनुत् ॥ २ ॥ इति चतुर्मुखरसः ।

## अथ रत्नगर्भपोटलीरसः ।

रसं वज्रं हेम तारं नागं लोहं तथाऽभ्रकम् । तुल्यांशं मारितं योज्यं मुक्तामाक्षिकविद्रुमम् ॥ १ ॥ राजावर्तं च वैक्रान्तं गोमेदं पुष्परागकम् । शङ्खं च तुल्यतुल्यांशं ससार्द्रं चित्रकद्रवैः ॥ २ ॥ मर्दयित्वा विचूर्ण्याथ तेनाऽऽपूर्य वराटकान् । टङ्कणं रविदुग्धेन पिष्ट्वा तन्मुद्रणं चरेत् ॥ ३ ॥ मृद्भाण्डे तान्तु संस्थाप्य सम्यग्गजपुटे पचेत् । आदाय चूर्णयेत्सम्यग्निर्गुण्ड्याः सप्त भावनाः ॥ ४ ॥ आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः । दत्त्वैर्भाव्यं ततः शुष्कं देयं गुञ्जाचतुष्टयम् ॥५॥ क्षयरोगं निहन्त्याशु सत्यं शिव इवान्धकम् । योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैश्च वा । पोटलीरसगर्भोऽयं सर्वरोगहरा मता ॥ ६ ॥

## अथ राजमृगाङ्कः ।

रसस्य त्रिभागं ■ भागैकं हेमभस्मकम् । मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १ ॥ प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णितम् । वराटान्पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥ २ ॥ पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे संनिधापयेत् । शुष्कं गजपुटे पाच्यं चूर्णयेत्स्वाङ्गशीतलम् ॥ ३ ॥ रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः । एकोनविंशन्मरिचैर्घृतेन सह भक्षयेत् ॥ ४ ॥ दशानां पिप्पलीनां ■ चूर्णं दत्त्वा प्रदापयेत् । क्षये कासे ज्वरे पाण्डौ ग्रहण्यामतिसारके ॥ ५ ॥ इति राजमृगाङ्कः ।

## अथ रसरत्नप्रदीपान्मृगाङ्कः ।

रसेन तुल्यं कनकं तयोस्तु साम्येन गुञ्जात्रयमौक्तिकानि । रसप्रमाणो बलिस्त्रिभागः क्षारश्च सर्वं तुषवारिणा तु ॥ १ ॥ संमर्द्य चक्रं तु विधाय गोलं दिनं पचेत्तं लवणेन पूर्णे । भाण्डे मृगाङ्कोऽयमतिप्रगल्भः क्षयाग्निमान्द्यग्रहणी-

गदेषु ॥ २ ॥ साज्योपणामिर्मधुपिप्पलीभिर्वल्लोऽस्य देयो न ततोऽधिकस्तु । पथ्यं हितं शीतलमेव योज्यं त्याज्यं सदा पित्तकरं विदाहि ॥ ३ ॥ अन्यच्च वैद्यविलासात्—रसबलितपनीयं योजयेत्तुल्यभागं तदनु शुगुलभागं मौक्तिकानां शुभानाम् । यवजचरणयुक्तं मर्दयेत्सर्वमेतद्दिनमपि तुषधारा गोलकं लवमग्रे ॥ १ ॥ विधाय मुद्रां विदधीत भाण्डे चुल्ल्यां समुद्रे लवणेन पूर्णे । दिनं पचेचारु मृगाङ्कनामा क्षयाग्निमान्द्यग्रहणीविकारे ॥ २ ॥ योज्यः सदा घल्लिजसर्पिषा वा कृष्णामधुभ्यां सततं त्रिगुञ्जः । वर्ज्यं सदा पित्तकरं हि वस्तु लोकेरावरपथ्यविधिर्निरुक्तः ॥ ३ ॥ इति मृगाङ्कः ।

## अथ नवरत्नराजमृगाङ्कः ।

सूतं गन्धकहेमतारसकं वैक्रान्तकान्तायसं वङ्गं नागपविप्रवालविमलामाक्षिकयगाक्समतम् । ताप्यं मौक्तिकपुष्परागजलजं वैडूर्यकं शुल्बकं शुक्तिस्ताळकमभ्रहिङ्गुलशिला गोमेदनीलं समम् ॥ १ ॥ गोक्षूरैः फणिवल्लिसिंहवदनाग्रुण्डीकणाचित्रकैरिक्षुच्छिद्ररुहाहरप्रियजयाद्राक्षावरीजद्रवैः । शोफमीशतपत्रिकामधुजलैः सच्छाल्मलीधातकीजातीसत्त्वकाचतुष्टयजलरवगदेवपुष्पत्रयैः ॥ २ ॥ कङ्कोलैर्मृनागकेसरजलैर्भाव्यं पृथक्सदा भाण्डे सिन्धुभृते मृगाङ्कवदयं पाच्यः क्रमाग्नौ दिनम् । भूयः प्राक्समुदाहृतैर्द्रवचयैस्तं भावयेत्पूर्ववत्पश्चात्तुल्यविभागशीतकरजःकस्तूरिका भावना ॥ ३ ॥ गोप्याद् गोप्यतरं रसायनमिदं श्रीशंकरेणोदितं गुञ्जासिन्धुयुतं कणामधुयुतं शोफे सर्पाङ्गामये । वातव्याधिमुपद्रवैश्च सहितं मेहांश्चया विंशतिं संयोज्यं च हरीतकीगुडयुतं वातात्मके दुर्जये ॥ ४ ॥ गम्भीरे च गुडूचिसत्त्वचपलाक्षौद्रैस्तु संयोजितस्त्वाध्मानारुचिशूलमान्द्यकसनापक्वाशयातोदरात् । श्वासान्संग्रहणीं हलीमकमथो सर्वज्वरान्नाशयेद्वातान्शोषयति क्षयं क्षपयति श्यामाशवं यौवजम् ॥ ५ ॥ मौढाटोपयुतं करोति सहसा सादव्यगर्वोज्झितं सिद्धो राजमृगाङ्क एष जयति सत्त्वानुपानैर्गदान् ॥ ६ ॥ इति नवरत्नराजमृगाङ्कः ।

## अथ महाकनकसिन्दूररसः ।

रसगन्धकनागाश्च रसको माक्षिकाभ्रके । कान्तविद्रुममुक्तानां पञ्चमस्तु च सारकम् ॥ १ ॥ भस्म कृत्वा प्रयत्नेन प्रत्येकं कर्षसंमितम् । सर्वतुल्यं शुद्धहेमभस्म कृत्वा प्रयोजयेत् ॥ २ ॥ मर्दयेत्त्रिदिनं सर्वं हंसपादीरसैर्भिषक् । ततो वै गोलकान्कृत्वा काचकूप्यां विनिक्षिपेत् ॥ ३ ॥ रुद्ध्वा तत्काचकूपीं च वस्त्रखेण वेष्टिताम् । ततो वै सिकतायन्त्रे त्रिदिनं चोक्तवह्निना ॥ ४ ॥ पश्चात्तं स्वाङ्गशीतं च पूर्वोक्तरसमर्दितम् । विनिक्षिप्य करण्डेऽथ संपूज्य [illegible] ॥ ५ ॥ महाकनकसिन्दूरो राजयक्ष्महरः परः । पाण्डुरोगं [illegible] ग्रहणीगदान् ॥ ६ ॥ क्रिमिशोफोदरावर्तगुल्ममेहगुदाङ्कुरान् । [illegible] चिमामशूलहलीमकान् ॥ ७ ॥

१ भाटरूषः.

रोगमपस्मारं वातरोगान्विशेषतः ॥ ८ ॥ रक्तपित्तप्रमेहांश्च क्षीणां रक्तस्वपा-
छाया । विंशतिश्लेष्मरोगांश्च शूलरोगांश्चिरन्तनान् ॥ ९ ॥ हेमपर्वतश्च यस्याश्च
आयुःशुक्रविवर्धनः । महाकनकसिन्दूरः कश्यपेन विनिर्मितः ॥ १० ॥ इति
महाकनकसिन्दूररसो योगतरङ्गिण्याः ।

## अथ कनकसुन्दररसः ।

योगसारे—रसः कनकमाक्षिकः कनकमाक्षिकटङ्कणाः शिलारसकणाभ्रका र-
सगन्धाः समतुल्या इमे । विमर्द्य पयसा रवेः सकलमेतदश्मोपरि द्रवैः प्रतिदिनं
पृथग्दिति भावयेद् बुद्धिमान् ॥ १ ॥ जैपालमुनिकेटिमियादहनमूलवासोद्भवै-
र्विभाव्य च रसोत्तमः सुरदलोकके स्वेदयेत् । मृगाङ्कपद्धयाऽऽर्द्रकद्रवभरेण तं
सप्तधा विमर्द्य च कटुत्रयाम्बुभिरयं क्षयसाम्लानुत् ॥ २ ॥ रसः कनकसुन्दरो
जयति संनिपातेऽप्ययं सदाऽऽर्द्रकरसेन वा पवनगुल्मशूलप्रणुत् । स त्रिफलसतयो-
जितः सकलमत्र पथ्यं हितं मृगाङ्कदधापरं किमपि नैव योज्यं क्वचित् ॥ ३ ॥
इति कनकसुन्दरो रसः ।

## अथ सुवर्णभूपतिः ।

शुद्धसूतसमं गन्धं मृतशुल्वं तयोः समम् । अभ्रलोहकयोर्भस्म कान्तमस्म
सुवर्णजम् ॥ १ ॥ रजतं च त्रिभं तत्पञ्चप्रत्येकसूतसमं भवेत् । हंसपादीरसैर्मर्द्यं
दिनमेकं वटीकृतम् ॥ २ ॥ काचकूप्यां विनिक्षिप्य मृदा संलेपयेद्बहिः । शुष्का
सा वालुकायन्त्रे शनैर्वह्निना पचेत् ॥ ३ ॥ चतुर्गुञ्जामितं देयमार्द्रकत्र्यपि-
प्पली । क्षयं त्रिदोषजं हन्ति संनिपातांस्त्रयोदश ॥ ४ ॥ आमवातं चतुर्थांशं
मङ्गुलापातमेव च । आढ्यवातं पङ्गुवातं कफवाताग्निमान्द्यनुत् ॥ ५ ॥ कटिवातं
सर्वशूलं नाशयेन्नात्र संशयः । गुल्ममष्ठीलमुदावर्तं ग्रहणीमतिदुस्तराम् ॥ ६ ॥
प्रमेहमुदरं सर्वामश्मरीं मूत्रविग्रहम् । भगंदरं सर्वकुष्ठं विद्रधिं महतीं तथा
॥ ७ ॥ श्वासकासमजीर्णं च ज्वरमष्टविधं तथा । कामलां पाण्डुरोगं च शिरोरोगं
च नाशयेत् ॥ ८ ॥ अनुपानविशेषेण सर्वरोगान्विनाशयेत् । यथा सूर्योदये
नश्येत्तमः सर्वगतं तथा । सर्वरोगविनाशाय सर्वेषां स्वर्णभूपतिः ॥ ९ ॥

इति सुवर्णभूपतिः ।

## अथ लक्ष्मीविलासः ।

सुवर्णताराभ्रकताम्रवङ्गत्रिलोहनागामृतमौक्तिकानि । एतत्समं योज्य रसस्य
भस्म खल्वे कृतं स्यात्कृतकज्जलीकम् ॥ १ ॥ सुमर्दयेन्माक्षिकसंप्रयुक्तं तच्छोष-
येद्द्वित्रिदिनं च घर्मे । तत्कल्कयूषोदरमध्यगामि वराटकं साध्यपुटेन पक्वम्
॥ २ ॥ यामाष्टकं पाचकमर्दितं च लक्ष्मीविलासो रसराज एषः । क्षये त्रिदोष-
प्रभवे च पाण्डौ सकामलाश्वाससमीरणेषु ॥ ३ ॥ शोफप्रतिश्यायविनष्टवीर्यं
मूत्रामयं चैव सशूलकुष्ठम् । हत्वाऽग्निमान्द्यं क्षयसंनिपातं श्वासं च कासं च
हरेत्प्रयुक्तम् ॥ ४ ॥ तारुण्यलक्ष्मीप्रतिबोधनाय श्रीमद्विलासो रसराज एषः ॥५॥

१ टाकली । २ विभीतकः ।

